# ऋतुसंहारम्।

ग्रीष्मवर्णनम्।

प्रथमः सर्गः।

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः
सदावगाहक्षतवारिसञ्चयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो *
निदाघकालोऽयमुपागतः प्रिये ॥ १ ॥

---

यः समस्तविदुषां शिरोमणिर्येन राजति सभा विपश्चिताम्।
तं महीश्वरकृताङ्घ्रिवन्दनं नीलकण्ठपितरं नमाम्यहम् ॥
शृङ्गारैकप्रधानं यदृतुसंहारनामकम्।
काव्यं तत्कालिदासीयं व्याख्यास्येऽहं यथामति ॥
अप्रचारतमोमग्नाः कालिदासकृतिर्यतः।
क्रियतेऽतश्चन्द्रिकेयं विबुधाऽऽनन्ददायिनीम् ॥

तत्र भगवान् कालिदासनामा कविश्चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थम् "आशीर्नमस्क्रियावस्तुनि-

---

* उपजातमन्मथ इत्यपि पाठ्यते।

१ ऋतु

निशाः शशाङ्कक्षतनीलराजयः
क्वचिद्विचित्रं जलयन्त्रमन्दिरम्।
मणिप्रकाराः सरसं च चन्दनं
शुचौ प्रिये यान्ति जनस्य सेव्यताम्॥ २॥

---

ईशोवाऽपि तन्मुखैः” इत्याशिराद्यन्यतमस्य मङ्गलत्वेन तदन्यतरद्वस्तुनिर्देशरूपं मङ्गलमाचरन्नादौ ग्रीष्मकालवर्णनरूपां कथां प्रियायै कश्चिन्नायकः प्रणौति। प्रचण्डेति। प्रचण्ड उग्रः सूर्यो यस्मिन् सः तथोक्तः हिमांशुश्चन्द्रमाश्चन्द्र” इत्यमरः। सदा निरन्तरमवगाहेन क्षतः क्षीणो वारिसञ्चयो यस्मिन् सः तथोक्तः, दिनान्तः सन्ध्याकालो रम्यो रमणीयो यस्मिन्स तथोक्तः, दिवसे सूर्यसत्वादौष्णजनितव्याकुलत्वं चन्द्रोदयादिना च शीतलत्वात्तस्य रम्यत्वम्, अभि समन्तादुपशान्तः मन्मथः कन्दर्पो यस्मिन्, वसन्ते द्विगुणः कामो च वसन्ताऽपगमेव, कामोपशान्तिः अयन्निदाघकालो ग्रीष्मकाल उपागतः हे प्रिये! वंशस्थवृत्तमेतत् “जतौ तु वंशस्थमुदीरितं जरौ” इति लक्षणात्॥ १॥

निशाइति। हे प्रिये! शशाङ्केन कर्त्रा क्षता दूरीकृताः नीलराजयः तमः पङ्क्तयो यासां तास्तथोक्ताः, निशा रात्रयः “निशा निशीथिनीरात्रि” इत्यमरः। क्वचिद्विचित्रं जलयन्त्रेण युक्तं मन्दिरं गृहं, मणिप्रकाराः

सुवासितं हर्म्यतलं मनोहरं
प्रियामुखोच्छ्वासविकम्पितं मधु ।
सुतन्त्रिगीतं मदनस्य दीपनं
शुचौ निशीथेऽनुभवन्ति कामिनः ॥ ३ ॥

नितम्बबिम्बैः सुदुकूलमेखलैः
स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नानकषायवासितैः
स्त्रियो निदाघं शमयन्ति कामिनाम् ॥ ४ ॥

---

मणिविशेषाश्चन्द्रकान्तादयः, सरसं सान्द्रं चन्दनञ्च शुचौ ग्रीष्मकाले जनस्य लोकस्य सेव्यतामुपभोगविषयतां यान्तीति वचनं विपरिणामेनान्वयः ॥ २ ॥

सुवासितमिति । कामिनो विलासिनः शुचौग्रीष्मकाले निशीथेऽर्द्धरात्रे "अर्द्धरात्रनिशीथौद्वौ" इत्यमरः । सुवासितं सुगन्धजलसेकादिना मनोहरं सुन्दरं हर्म्यतलं प्रासादतलं प्रियामुखस्यकान्तावदनोच्छ्वासेन विकम्पितं मधुसुधाविशेषः मदनस्य कन्दर्पस्य दीपनं दीपकमुद्दीपकं सुतन्त्रिणा गीतं गानं "गीतं गानमिमे समे" इत्यमरः । अनुभवन्तीत्यर्थः । एतेनापि ग्रीष्मकालस्य कामिनां मनोहरत्वमुक्तम् ॥ ३ ॥

नितम्बेति स्त्रियो विलासिन्यो दुकूलानि सूक्ष्मवस्त्राणि मेखलारसनाश्च ताभिः सहितानि तैस्तथोक्तैः नितम्बबिम्बैः कटिपश्चाद्भागैः "पश्चान्नितम्बः स्त्रीकट्याः"

नितान्तलाक्षारसरागलोहितै-
र्नितम्बिनीनाञ्चरणैः सनूपुरैः ।
पदे पदे हंसरुतानुकारिभि
र्जनस्य चित्तं क्रियते समन्मथम् ॥ ५ ॥
पयोधराः चन्दनपङ्कचर्चिता
स्तुषारगौरार्पितहारशेखराः ।

---

इत्यमरः । हाराभरणानि च तैः सहिता तैस्तथोक्तैः सचन्दनैः चन्दनलिप्तस्नानैः स्नाने स्नानकाले यः कषाय-कापितसुगन्धिद्रव्यस्तेन वासिताः सञ्जातवासा तैस्तथोक्तैः शिरोरुहैः केशैः कामिनां निदाघमुष्णाणं शमयन्ति दूरी-कुर्वन्तीत्यर्थः ॥ ४ ॥

नितान्तेति । नितान्तमत्यन्तं लाक्षारसस्य रागेण रञ्जितास्तयोक्तैः मञ्जीरसहितैः "मञ्जीरन्नुपुरोऽस्त्रियाम्" इत्यमरः । पदे पदे प्रतिपदं हंसरुतं मरालशब्दमनुकुर्वन्ति तैस्तथोक्तैः नितम्बिनीनां चरणैर्जनस्य लोकस्य चित्तमन्तः-करणं समन्मथं मदनसहितं "मदनो मन्मथो मार" इत्य-मरः । क्रियत इत्यर्थः ॥ ६ ॥

पयोधरा इति । चन्दनस्य पङ्केन द्रवेण चर्चिता लिप्ता अतएव तुषारवद्गौराः शुभ्रवर्णा अर्पिता हारशेखराः श्रेष्ठहाराः येषुते तथोक्ताः पयोधराः स्तनाः सहेममेखलाः सुवर्णरसनासहिताः "स्त्रीकट्यां मेखला काञ्ची सप्तकी

नितम्बदेशाश्च सहेममेखलाः
प्रकुर्वते कस्य मनो न सोत्सुकम् ॥ ६ ॥
समुद्गतस्वेदचिताङ्गसन्धयो-
विमुच्य वासांसि गुरूणि साम्प्रतम् ।
स्तनेषु तन्वंशुकमुन्नतस्तना
निवेशयन्ति प्रमदाः सयौवनाः ॥ ७ ॥
सचन्दनाम्बुव्यजनोद्भवानिलैः
सहारयष्टिस्तनमण्डलार्पणैः ।

---

रसना तथा" इत्यमरः। नितम्बदेशाः श्रोणी बिम्बाश्च कस्य मनः सोत्सुकं सोत्कण्ठं न प्रकुर्वते प्रकर्षेण कुर्वन्तीत्यपि तु सर्वस्यापीत्यर्थः ॥ ६ ॥

समुद्गतेति। समुद्गतो निर्गतो यः स्वेदो घर्मस्तेन चिताः व्याप्ताः सन्धयो बाहुमूलादयो यासां तास्तथोक्ताः सयौवनास्तारुण्यसहिताः उन्नतस्तना उच्चकुचाः प्रमदाः स्त्रियः साम्प्रतमिदानीं गुरूणि जड़ानि वासांसि वस्त्राणि विमुच्य दूरीकृत्य स्तनेषु कुचेषु तनु सूक्ष्ममंशुकं वासः कञ्चुक्यादि निवेशयन्ति स्थापयन्तीत्यर्थः ॥ ७ ॥

सेति। चन्दनाम्बुना चन्दनजलेन चन्दनद्रवेणेति यावत् सहितं युक्तं यद्व्यजनं तदुद्भवास्तदुत्पन्ना योऽ-निलाः वायवस्तै-र्हारयष्ट्या कुसुममालया सहितानि युक्तानि यानि स्तनमण्डलानि कुचमण्डलानि तेषामर्पणैः

सवल्लकीकाकलिगीतनिस्वनै-
र्विबोध्यते सुप्त इवाऽद्य मन्मथः ॥ ८ ॥
सितेषु हर्म्येषु निशासु योषितां
सुखप्रसुप्तानि मुखानि चन्द्रमाः ।
विलोक्य नूनं भृशमुत्सुकश्चिरं
निशाक्षये याति ह्रियेव पाण्डुताम् ॥ ९ ॥
असह्यवातोद्धतरेणुमण्डला
प्रचण्डसूर्य्याऽऽतपतापिता मही ।

---

वल्लक्या वीणया सहिताश्च ते काकलिनः सूक्ष्मकलाश्च ते गीतनिस्वनाः गानानिनादश्च तैः "वीणातु वल्लकी" इत्यमरः। "काकली तु कले सूक्ष्मे" इत्यमरः। गीतं गानमिसेसम, इत्यमरः। अद्य मन्मथः कामः सुप्त इव विबोध्यते इत्यर्थः॥ ८॥

सितेष्विति। चन्द्रमाः निशासु रात्रिषु सितेषु हर्म्येषु धवलेषु प्रासादेषु योषितां स्त्रीणां सुखेन प्रसुप्तानि निद्रितानि मुखानि वदनानि चिरं चिरकालं विलोक्यावलोक्य भृशमत्यन्तमुत्सुक उत्कण्ठितः सन्निशाक्षये रात्रिक्षये ह्रियेव लज्जयेव पाण्डुरतां याति गच्छति नूनमिति वितर्कः॥ ९॥

असह्येति। प्रियावियोगः कान्तावियोगः सएवाऽनलोऽग्निस्तेन दग्धं भस्मीभूतं मानसमन्तःकरणं येषान्तैः स्रायोक्तैः प्रवासिभिरसह्यःसोढुमशक्यो यो वातो वायुस्त-

न शक्यते द्रष्टुमपि प्रवासिभिः
प्रियावियोगानलदग्धमानसैः ॥ १० ॥
मृगाः प्रचण्डाऽऽतपतापिता भृशं
तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता
निरीक्ष्य भिन्नाञ्जनसन्निभन्नभः ॥ ११ ॥
सविभ्रमैः सस्मितजिह्मवीक्षितै-
र्विलासवत्यो मनसि प्रवासिनाम् ।

---

नोद्धृतमुच्छ्रितं रेणुमण्डलं यस्याः सा तथोक्ताः प्रचण्ड उग्रो यः सूर्य्यस्तस्य आतप उष्णं तेन तापिता मही पृथ्वी द्रष्टुमपि न शक्यते गन्तुं न शक्यत इति किमु वक्तव्यमित्यर्थः ॥ १० ॥

मृगा इति । भृशमत्यन्तं प्रचण्डस्तीक्ष्णतरो य आतप उष्णं तेन तापिताः सन्तापिता महत्या तृषा पिपासया परिशुष्काः संशुष्काः तालवो येषान्ते तथोक्ताः मृगाः हरिणाः भिन्नाञ्जनेन सन्निभन्तुल्यं नभः आकाशन्निरीक्ष्य वीक्ष्य तोयं जलमिति बुद्ध्या वनान्तरे प्रधाविताः ॥ ११ ॥

सविभ्रमैरिति । यथा शशिचारुभूषणाः शशीव चन्द्र एव चारु सुन्दरं भूषणं येषान्ते तथोक्ताः प्रदोषाः सन्ध्यासमयाः प्रवासिनाम्मनस्सु अन्तःकरणेऽनङ्गसन्दीपनं कामस-

अनङ्गसन्दीपनमाशु कुर्व्वते
यथा प्रदोषाः शशिचारुभूषणाः ॥ १२ ॥
रवेर्मयूखैरभितापितो भृशं
विदह्यमानः पथि तप्तपांशुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन्मुहु
र्फणी मयूरस्य तले निषीदति ॥ १३ ॥
तृषा महत्या हतविक्रमोद्यमः
श्वसन्मुहुर्दूरविदारिताननः ।

---

न्दीपनङ्कुर्व्वंति तथेत्यध्याहार्य्यं शशिचारुभूषणा शशी चन्द्रः सएवचारूणि सुन्दराणि भूषणानि यासान्तास्तथोक्ताः वि॰ लासवत्यो विलासिन्यः सविभ्रमैः विभ्रमसहितैः सस्मितानि सहासानि जिह्मानि कुटिलानि वीक्षितानि निरीक्षणानि तैः कृत्वा प्रवासिनाम्मनसि आशु झटिति अनङ्गसन्दीपन॰ ङ्कुर्व्वंत इत्यर्थः ॥ १२ ॥

रवेरिति । रवेः सूर्य्यस्य मयूखैः किरणैः "किरणोस्रमयूखांशु गभस्तिघृणिरश्मय" इत्यमरः । अभितापितः सन्तापित भृशमत्यन्तं पथि मार्गे तप्तपांशुभिः उष्णतेजो॰ भिर्विदह्यमानः अवाङ्मुखः अधोमुखः जिह्मगतिर्मुहुर्व्वारं वारं श्वसन् उच्छ्वासं कुर्व्वन् फणीसर्पः "मयूरो बर्हिणो बर्हि" इत्यमरः । तले अधोभागे निषीदति अवतिष्ठत इत्यर्थः॥१३॥

न हन्त्यदूरेऽपि गजान्मृगेश्वरो
विलोलजिह्वश्चलिताग्रकेशरः ॥ १४ ॥
विशुष्ककण्ठा हृतशीकराम्भसो
गभस्तिभिर्भानुमतोऽनु तापिताः।
प्रवृद्धतृष्णोपहता जलार्थिनो
न दन्तिनः केशरिणोऽपि बिभ्यति ॥ १५ ॥

---

तृषेति। महत्या तृषा पिपासया हत विक्रमस्य पराक्रमस्योद्योगो यस्य तथोक्तो मुहुर्वारं वारं दूराद्विदारितं विस्तारितमाननं मुखं येन स तथोक्ता विलोलजिह्वाश्चलिताश्चञ्चला अग्रकेशरा अग्रसटाः यस्य सस्तथोक्तो मृगेश्वरो मृगेन्द्रः सिंहः "सिंहो मृगेन्द्रस्तराक्षे" इत्यमरः। अदूरेऽपि समीपे वर्त्तमानानिति शेषः। गजान्मातङ्गान्न हन्ति न मारयन्तीत्यर्थः। नहि जायते स्वस्मिन् क्लेशिते पर हनने प्रवृत्तिरिति भावः॥ १४ ॥

विशुष्केति। विशुष्केण कण्ठेनाहृतङ्गृहीतं शीकराम्भस्तुषारजलं यैस्ते तथोक्ताः। भानुमतः किरणमालिनः सूर्यस्य गभस्तिभिः रश्मिभिः अनुतापिताः, [illegible]रुन्तापित प्रवृद्धतृष्णया पिपासयोपहताः पीड़िताः अतए जलार्थिनो जलकाङ्क्षिणो दन्तिनो गजाः केशरिणः सिंहादपि न बिभ्यति भयन्न प्राप्नुवन्तीत्यर्थः॥ १५ ॥

हुताग्निकल्पैः सवितुर्गभस्तिभिः
कलापिनः क्लान्तशरीरचेतनाः।
न भोगिनं घ्नन्ति समीपवर्त्तिनं
कलापचक्रेषु निवेशिताननम्॥ १६॥

सभद्रमुस्तं परिशुष्ककर्दमं
सरः खनन्नायतपोत्रमण्डलैः।
रवेर्मयूखैरभितापितो भृशं
वराहयूथो विशतीव भूतलम्॥ १७॥

---

हुताग्निकल्पैरिति। सवितुः सूर्य्यस्य हुताग्निकल्पैः हुतश्चासावग्निश्च तत्कल्पैस्तत्सदृशैस्तदत्यन्तप्रचण्डैरिति यावत्, गभस्तिभिरंशुभिः क्लान्तं ग्लानं शरीरं वपुश्चेतनं चेतश्च येषान्ते तथोक्ताः कलापिनो मयूराः कलापचक्रेषु बर्हमण्डलेषु निवेशितं प्रवेशितमाननं मुखं येन तत्तथोक्तं समीपवर्त्तिनं भोगिनं सर्पं न घ्नन्ति न मारयन्तीत्यर्थः॥ १६॥

सभद्रेति। भद्रमुस्तेन भद्रमोथा इति प्रसिद्धेन सहितं परिशुष्कः कर्द्दमः पङ्को यस्मिंस्तत्तथोक्तं सरः सरोवरमायतानि दीर्घाणि यानि पोत्रमण्डलानि तैः कृत्वा खनन् रवेः सूर्य्यस्य मयूखैः किरणैरभितापितः सन्तापितो वराहयूथः सूकरसमूहो "वराहः सूकरो घृष्टि" इत्यमरः। भूतलं विशति प्रविशतीवेत्युत्प्रेक्षा॥ १७॥

उत्प्लुत्य भेकस्तृषितस्य भोगिनः
फणातपत्रस्य तले निषीदति ॥ १८ ॥
समुद्धृताऽशेषमृणालजालकं
विपन्नमीनं द्रुतभीतसारसम् ।
परस्परोत्पीडनसंहतैर्गजैः
कृतं सरः सान्द्रविमर्दकर्दमम् ॥ १९ ॥
रविप्रभोद्भिन्नशिरोमणिप्रभो
विलोलजिह्वाद्वयलीढमारुतः ।

विवस्वतेति । तीक्ष्णतरैः प्रचण्डतरैरंशुभिः किरणै-र्भाति शोभते तथोक्तेन विवस्वता सूर्य्येणाऽभितापितो भेको मण्डूकः "भेके मण्डूकवर्षाभू" इत्यमरः । पङ्कतोयेन कर्दमजलेन सहितं युक्तं तस्मात्तथोक्तात्सरसः सरोवरादुत्प्लुत्य तृषितस्य भोगिनः पन्नगस्य "उरगः पन्नगो भोगी" इत्यमरः फणैवातपत्रं छत्रन्तलेऽधोभागे निषीदति अव-तिष्ठते इत्यर्थः ॥ १८ ॥

समुद्धृतेति । समुद्धृतन्निष्काशितमशेषं सम्पूर्णं मृणालजालकं बिससमूहो यस्मात्तत्तथोक्तं विपन्नमीनं समापन्नमीनं द्रुताः पलायिताभीताश्च ते सारसाश्चते यस्मात्त-थोक्तं सरःसरोवरं परस्परोत्पीडनं संहतैः सङ्घीभूतैर्गजैः सान्द्रो निविड़ो विमर्दः संग्रामः कर्दमः पङ्कश्च यस्मिंस्तत्तथा यद्वा सान्द्रो निविड़ो विमर्देन सङ्ग्रामेण कर्दमः पङ्को यस्मिंस्तत्तथाभूतमित्यर्थः ॥ १९ ॥

विषाग्निसूर्यातपतापितः फणी
न हन्ति मण्डूककुलं तृषाऽऽकुलः ॥ २० ॥
सफेनलोलायतवक्त्रसंपुटं
विनिःसृतालोहितजिह्वमुन्मुखम् ।
तृषाकुलं निःसृतमद्रिगह्वरा-
दवेक्षमाणं महिषीकुलं जलम् ॥ २१ ॥
पटुतरदवदाहोच्छुष्कसस्यप्ररोहाः
परुषपवनवेगोत्क्षिप्त संशुष्कपर्णाः ।

---

रवीति । रविप्रभया सूर्यकान्त्योद्भिन्ना निर्गताः शिरोमणेः मूर्द्धन्यमणेः प्रभा कान्तिर्यस्य सः तथोक्तो विलोलेन चञ्चलेन जिह्वाद्वयेन लीढ आलीढ मारुतः पवनो येन सः तथोक्तो विषाग्निसूर्यातपतापितः विषं गरल मग्निर्दावानलः सूर्यातप उष्णं तैस्तापित अत एव तृषाकुलः फणी सर्पो मण्डूककुलं भेकसमूहन्न हन्ति न मारयन्तीत्यर्थः ॥ २० ॥

सफेनेति । सफेनं लोलञ्चञ्चलमायतं दीर्घं वक्त्रसंपुटं मुखसंपुटं यस्य तत्तथोक्तं, विनिःसृता निर्गता आसमन्ताल्लोहिता रक्ता जिह्वा यस्य तत्तथोक्तम्, उन्मुखमूर्द्धमुन्नाय तृषा पिपासयाऽऽकुलं व्याकुलम् अतएव जलं सलिलमवेक्षमाणन्निरीक्षमाणं महिषीकुलम् अद्रिगह्वराद्गिरिगह्वरान्निर्गतमित्यर्थः "अद्रिगोत्रगिरिग्राव" इत्यमरः ॥२१॥

दिनकरपरितापक्षीणतोयाः समन्ता
द्विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥ २२ ॥
श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम् ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छ
ञ्छरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥ २३ ॥

---

पटुतरेति । पटुतरोऽतिसमर्थो यो दवो दावस्तस्य दहनोच्छुष्काः शष्पप्ररोहाः शष्पाङ्कुराः येषु ते तथोक्ताः, परुषो निष्ठुरो यो वायुः पवनस्तस्य वेगेनोत्क्षिप्तानि ऊर्द्ध्वक्षिप्तानि संशुष्कानि पर्णानि येषु ते तथोक्ताः, समन्तादितस्ततः दिनकरस्य परितापेनातपेन क्षीणानि तोयानि येषु तेषु ते तथोक्ताः, उच्चैरुच्चप्रदेशतो वीक्ष्यमाणाः अवलोक्यमाना वनान्ताः अरण्यप्रान्ता भयं विदधतीत्यर्थः मालिनीवृत्तमेतत्, तल्लक्षणन्तु "ननमयययुतेयं मालिनी भोगिलोकै" रिति ॥ २२ ॥

श्वसितीति । शीर्णानि गलितानि पर्णानि पत्राणि यस्य सः तादृशो यो द्रुमो वृक्षः तत्र तिष्ठतीति स तथोक्तो विहगवर्गः पक्षिसमुदायः श्वसिति श्वासोच्छ्वासं करोति, क्लान्तं म्लानं कपिकुलं वानरसमूहः अद्रेः पर्वतस्य निकुञ्जं लतागृहं "निकुञ्जकुञ्जौ वा क्लीबे" इत्यमरः । उपयाति गच्छतीत्यर्थः, गवया वनगविशेषास्तेषां यूथः समुदायः तोयं

विकचनवकुसुम्भस्वच्छसिन्दूरभासा
प्रबलपवनवेगोद्भूतवेगेन तूर्णम् ।
तटविटपलताग्राऽऽलिङ्गनव्याकुलेन
दिशि दिशि परिदग्धा भूमयः पावकेन ॥ २४ ॥
ज्वलति पवनवृद्धः पर्व्वतानां दरीषु
स्फुटति पटुनिनादैः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्यं लब्धवृद्धिः क्षणेन
ग्लपयति मृगवर्गं प्रान्तलग्नो दवाग्निः ॥ २५ ॥

---

जलमिच्छन् सर्व्वत इतस्ततो भ्रमति, अजिह्मसकुटिलं शरभस्य कुलं शरभाः अष्टापदपशुविशेषाः तेषां कुलं समुदायः कूपादम्बु जलं प्रोद्धरन्ति गृह्णन्तीत्यर्थः ॥ १३ ॥

विकचेति । विकचः प्रफुल्लो नवो नूतनो कुसुम्भस्तद्वत् स्वच्छो निर्म्मलो यः सिन्दूरः तस्य भा इव भाः कान्तिर्यस्य तेन तथोक्तेन तटप्रबलस्य पवनस्य वेगेनोद्भूतः संभूतो वेगो यस्य तथोक्तेन विटपानां वृक्षशाखालताग्राणां चालिङ्गनेन परिरम्भणेनाकुलो व्याकुलस्तेन तथोक्तेन पावकेन वह्निना दिशि दिशि भूमयः परिदग्धाः सन्दग्धा इत्यर्थः ॥ २३ ॥

ज्वलतीति । पवनेन वायुना वृद्धो वृद्धिं प्राप्तो दवाग्निर्दावानलो "दवदावौ वनानिलौ" वित्यमरः । पर्व्वतानां दरीषु कन्दरेषु ज्वलति तथा शुष्का वंशवेणवो यासु ताः स्थलीः अकृत्रिमभूमयः तासु पटुनिनादैः स्फुटति तथा क्षणेन लब्धा प्राप्ता वृद्धिर्येन तथोक्तः सन् तृणमध्यं प्रसरति

बहुतर इव जातः शाल्मलीनां वनेषु
स्फुरति कनकगौरः कोटरेषु द्रुमाणाम्।
परिणतदलशाखानुत्पतन् प्रांशुवृक्षा-
न्भ्रमति पवनधूतः सर्व्वतोऽग्निर्व्वनान्ते॥ २६॥

गजगवयमृगेन्द्रा वह्निसंतप्तदेहाः
सुहृद इव समन्ताद्द्वन्द्वभावं विहाय।
हुतवहपरिखेदादाशु निर्गत्य कक्षा
द्विपुलपुलिनदेशान्निम्नगां संविशन्ति॥ २७॥

---

तथा प्रान्तलग्नः सन्मृगवर्गं हरिणसमूहं ग्लपयति व्याकुलं कारयतीत्यर्थः। मालिनीवृत्तम्॥ २५॥

बहुतर इति। अग्निः शाल्मलीनां वनेषु बहुतरो जात इव स्फुरति, द्रुमाणां कोटरेषु शाखासु कनकगौरः काञ्चनगौरः स्फुरति, पवनेन वायुना धूतः कम्पितः सन् अत एव परिणताः परिपक्वा दलानि पर्णानि शाखाश्च येषान्तान् तथोक्तान् प्रांशुवृक्षानुन्नतद्रुमानुत्पतन् सन् सर्व्वतः समन्ततो भ्रमति भ्रमणं करोतीत्यर्थः॥ २६॥

गजेति। वह्निना दावाग्निना सन्तप्तो देहः शरीरं येषान्ते तथोक्ताः, अत एव द्वन्द्वभावं वैरभावं विहाय त्यक्त्वा सुहृदो मित्राणीव समेताः सम्मिलिता गजगवयमृगेन्द्राः गजो हस्ती गवयो मृगविशेषः मृगेन्द्रः सिंहः तैः, हुत-वहस्य वह्नेः परिखेदात्सन्तापात् यद्वा हुतवहस्य परि-

कमलवनचिताम्बुः पाटलामोदरम्यः
सुखसलिलनिषेकः सेव्यचन्द्रांशुहारः ।
व्रजतु तव निदाघः कामिनीभिः समेतो
निशि सुललितगीते ! हर्म्यपृष्ठे सुखेन ॥ २८ ॥

इति श्रीकालिदासकृतावृतुसंहारे
ग्रीष्मवर्णने प्रथमः सर्गः ॥ १ ॥

---

खेदो यत्र तस्मात्तथोक्तात् कच्छाद्गिरिगह्वरात् आशु झटिति निर्गत्य विपुलो महान् पुलिनदेशस्तीरं प्राप्तो यस्मात्ता-न्तथोक्तान्निम्नगान्नदीं संविशन्ति प्राश्रयन्त इत्यर्थः ॥२७॥

कमलेति । हे सुललितगीते ! सुललितमतिरमणीयं गीतं गानं यस्यास्तस्याः सम्बोधनं हे सुललितगीते! कमलानां पङ्कजानां वनेन समुदायेन चितं व्याप्तं अम्बु जलं यस्मिन् तथोक्तः पाटलानां पाटलकुसुमानां मामोदो गन्धो रम्यो रमणीयो यस्मिन्तथोक्तः यद्वा पाटलामोदेन रम्यो रमणीय इति सुखकरसलिलस्य निषेकः स्नानं यस्मिन्तथोक्तः सेव्याः सेवितुं योग्या चन्द्रस्यांशवः किरणा हाराः कुसुममालाश्च यस्मिन्तथोक्तः कामिनीभिः समेतो युक्तो निदाघकालः निशि रात्रौ हर्म्यपृष्ठे प्रासादतले सुखेन तव व्रजतु गच्छ-त्वित्यर्थः ॥ २८ ॥

इति प्रथमः सर्गः

## वर्षावर्णनन्नाम ।



### द्वितीयः सर्गः ।

सशीकराम्भोधरमत्तकुञ्जर
स्तडित्पताकोऽशनिशब्दमर्दलः ।
समागतो राजवदुद्धतद्युति
र्घनागमः कामिजनप्रियः प्रिये ! ॥ १ ॥

---

अथ क्रमप्राप्तं वर्षाकालं वर्णयति सशीकरेति। हे प्रिये ! सशीकरः साम्बुकणो योऽम्भोधरः जलधरः स एव मत्तः कुञ्जरो गजो यस्य स तथोक्तः। पक्षे सशीकराम्भोधर इव मत्तः कुञ्जरः यस्येति "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः। तडिद्विद्युदेव पताका यस्य स तथोक्तः पक्षे तड़िदेव पताका यस्येति "तड़ित्सौदामिनी विद्यु" दित्यमरः। अशनिशब्द एव मर्दलः अशनिर्वज्र इव यः शब्दो निनादः स एव मर्दलो वाद्यविशेषो यस्य स तथोक्तः, उद्धतद्युतिरुत्कटकान्तिः कामिजनप्रियो घनागमो वर्षाकालो राजवत्समागतः आगतः इत्यर्थः ॥ १ ॥

नितान्तनीलोत्पलपत्रकान्तिभिः
क्वचित् प्रभिन्नाञ्जनराशिसन्निभैः ।
क्वचित्सगर्भप्रमदास्तनप्रभैः
समाचितं व्योम घनैः समन्ततः ॥ २ ॥

तृषाकुलैश्चातकपक्षिणां कुलैः
प्रयाचितास्तोयभराऽवलम्बिनः ।
प्रयान्ति मन्दं बहुधारवर्षिणो
वलाहकाः श्रोत्रमनोहरस्वनाः ॥ ३ ॥

---

नितान्तेति । नितान्तमत्यन्तं नीलानि कृष्णानि यान्युत्पलानि कुवलयानि तेषां पत्राणां दलानां कान्तिरिव कान्तिर्येषां तैस्तथोक्तैः क्वचित् कुत्रचित् भागे प्रभिन्नो योऽञ्जनराशिः कज्जलसमूहः तेन सन्निभैः सदृशैः क्वचित्सगर्भाणां गर्भवतीनां ये स्तनाः कुचास्तेषां प्रभा इव प्रभा कान्तिर्येषां तै स्तथोक्तैर्घनै र्मेघैः व्योम आकाशं समन्ततः इतस्ततः समाचितं व्याप्तमित्यर्थः ॥ २ ॥

तृषेति । तृषा पिपासया आकुलैर्व्याकुलैश्चातकपक्षिणां कुलैः समुदायैः प्रयाचिताः प्रार्थितास्तोयभरेण जलभरेणाऽवलम्बन्त इति तथोक्ताः बह्वयो धाराः यस्यां क्रियायां यथा वर्षति ते तथोक्ताः, श्रोत्रस्य श्रवणस्य मनोहरः आह्लादकरः स्वनः शब्दो येषान्ते तथोक्ताः, वलाहकाः

बलाहकाश्चाऽशनिशब्दमर्दलाः
सुरेन्द्रचापं दधतस्तडिद्गुणम् ।
सुतीक्ष्णधारापतनोग्रसायकै
स्तुदन्ति चेतः प्रसभं प्रवासिनां ॥ ४ ॥

प्रभिन्नवैदूर्यनिभस्तृणाङ्कुरैः
समाचिता प्रोत्थितकन्दलीदलैः ।
विभाति शुक्लेतररत्नभूषिता
वराङ्गनेव क्षितिरिन्द्रगोपकैः ॥ ५ ॥

---

मेघाः "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहक" इत्यमरः। प्रयान्ति गगने सञ्चरन्तीत्यर्थः ॥ ३ ॥

बलाहका इति। अशनिशब्दमर्दला तडिद्विद्युदेव गुणो ज्या यस्य तत्तथोक्तं "मौर्वी ज्या शिञ्जिनी गुण" इत्यमरः, सुरेन्द्रचापमिन्द्रधनुः "धनुश्चापौ धन्वशरासन-कोदण्डकार्मुक" मित्यमरः। दधतो बलाहकाः मेघाः सुतीक्ष्णानां धाराणां जलधाराणां पतनान्येवोग्रसायकास्तीक्ष्ण-बाणास्तैः कृत्वा प्रवासिनां प्रोषितानां चेतोऽन्तःकरणं प्रसभमत्यन्तं तुदन्ति व्यथयन्तीत्यर्थः ॥ ४ ॥

प्रभिन्नेति। प्रभिन्नेन वैदूर्येण नीलमणिना निभाः सदृशा स्तैस्तथोक्तैः स्तृणाङ्कुरैः प्रोत्थितकन्दलीदलैः प्रोत्थितानि निर्गतानि यानि कन्दलीनां दलानि पत्राणि तैः, "द्रोणपर्णी स्निग्धकन्दा कन्दलीति" शब्दार्णवः, इन्द्रगोपकैः

सदा मनोज्ञं स्वनदुत्सवोत्सुकं
विकीर्णविस्तीर्णकलापशोभितम् ।
ससंभ्रमाऽऽलिङ्गनचुम्बनाऽऽकुलं
प्रवृत्तनृत्यं कुलमद्य बर्हिणाम् ॥ ६ ॥
निपातयन्त्यः परितस्तटद्रुमान्
प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः सुदुष्टा इव जातविभ्रमाः
प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥ ७ ॥

---

रत्नमणिविशेषैश्च समाश्रिता व्याप्ता क्षितिर्धरित्री "धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षिति" रित्यमरः, शुक्लेतरैः श्यामादिवर्णैः रत्नैर्भूषिता शोभिता वराङ्गनेव उत्तमनायिकेव विभाति शोभते इत्यर्थः ॥ ५ ॥

सदेति। सर्वदा मनोज्ञं सुन्दरं स्वनत् शब्दायमानम् उत्सवोत्सुकं हर्षोत्कण्ठितं यद्वा उत्सवे हर्षे उत्कण्ठितं, विकीर्णैः प्रसारितैः विस्तीर्णो लम्बमानो यः कलापो बर्हस्तेन शोभितं, ससंभ्रमं सवेगं यदालिङ्गनं परिरम्भणं चुम्बनं च तत्राऽऽकुलं व्याकुलं बर्हिणां कलापिनां कुलं प्रवृत्तमारब्धं नृत्यं नर्त्तनं येन तत्तादृशमस्ती-त्यर्थः ॥ ६ ॥

निपातयन्त्य इति। प्रवृद्धो वेगो येषां तैस्तथोक्तैर-निर्मलैः कलुषैः सलिलैर्जलैः "सलिलं कमलं जल" मित्य-

तृणोत्करैरुद्गतकोमलाङ्कुरै-
र्विचित्रनीलैर्हरिणीमुखक्षतैः ।
वनानि वैन्ध्यानि हरन्ति मानसं
विभूषितान्युद्गतपल्लवैर्द्रुमैः ॥ ८ ॥
विलोलनेत्रोत्पलशोभिताननै-
र्मृगैः समन्तादुपजातसाध्वसैः ।
समाचिता सैकतिनी वनस्थली
समुत्सुकत्वं प्रकरोति चेतसः ॥ ९ ॥

---

मरः, सरितः समन्ततः तटद्रुमान् तटप्ररूढवृक्षान् निपातयन्त्यः समूलमुन्मूलयन्त्यः नद्यः, जातः विभ्रमो यासां तास्तथोक्ताः सुदुष्टाः स्त्रिय इव त्वरितं शीघ्रं पयोनिधिं समुद्रं प्रयान्ति गच्छन्तीत्यर्थः ॥ ७ ॥

तृणोत्करैरिति। उद्गताः निर्गताः कोमला अङ्कुरा येषां तैस्तथोक्तैर्विचित्रनीलैर्हरिणीमुखैः क्षताः खण्डितास्तैस्तथोक्तैः तृणोत्करैरुद्गता निर्गताः पल्लवाः किसलयानि येषां तैस्तथोक्तैः "पल्लवोऽस्त्री किसलय" मित्यमरः, द्रुमैर्वैः शुभा विभूषितानि शोभितानि वैन्ध्यानि विन्ध्यसम्बन्धीनि वनानि काननानि "गहनं काननं वन" मित्यमरः, मानसमन्तःकरणं हरन्तीत्यर्थः ॥ ८ ॥

विलोलेति। विलोलानि चञ्चलानि यानि नेत्रोत्पलानि उत्पलसदृशानि नेत्राणि तैः शोभितानि आननानि

अभीक्ष्णमुच्चैर्ध्वनता पयोमुचा
घनान्धकारीकृतशर्वरीष्वपि।
तडित्प्रभा दर्शितमार्गभूमयः
प्रयान्ति रागादभिसारिकाः स्त्रियः ॥ १० ॥

---

वदनानि येषां तैस्तथोक्तैः "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुख" मित्यमरः, उपजातसाध्वसैः रुत्पन्नातभयैर्मृगैः हरिणैः "मृगे कुरङ्गवातायुहरिणाजिनयोनय" इत्यमरः, समन्तादितस्ततः समाचिता व्याप्ता सैकतिनी सिकतास्विनी वनस्थली अकृत्रिमारण्यभूमिः, चेतसः अन्तःकरणस्य समुत्सुकत्वमौत्सुक्यं प्रकरोति प्रकर्षेण जनयतीत्यर्थः ॥ ९ ॥

अभीक्ष्णमिति। अभीक्ष्णं मुहुर्मुहुः "मुहुर्मुहुः पुनः शश्वदभीक्ष्णमसकृत्समा" इत्यमरः, उच्चैः उच्चस्वरेण ध्वनता शब्दं कुर्वता पयोमुचा मेघेन घनान्धकारीकृतशर्वरीष्वपि अघनान्धकारा घनान्धकारा यया सम्पद्यन्ते तया कृताश्च ताः शर्वर्यो रात्रयो यया तथाभूतासु तडित्प्रभया विद्युत्कान्त्या दर्शिता मार्गभूमयो यासां तास्तथोक्ता अभिसारिकाः स्त्रियो रागात् अनुरागात् प्रयान्ति सङ्केतमिति शेषः गच्छन्तीत्यर्थः, अभिसारिकालक्षणं उक्तममरसिंहेन "कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेति" ॥ १० ॥

पयोधरैर्भीमगभीरनिस्वनै-
स्तडिद्भिरुद्वेजितचेतसो भृशम् ।
कृतापराधानपि योषितः प्रियान्
परिष्वजन्ते शयने निरन्तरं ॥ ११ ॥

त्रिलोचनेन्दीवरवारिविन्दुभि-
र्निषिक्तबिम्बाधरचारुपल्लवाः ।
निरस्तमाल्याभरणानुलेपनाः
स्थिता निराशाः प्रमदाः प्रवासिनां ॥ १२ ॥

---

पयोधरैरिति । भीमो भयानको गभीरो गम्भीरो निस्वनो निर्घोषो येषां तैस्तथोक्तैः "स्वाननिर्घोषनिर्ह्रादनिस्वनो निर्घोषो" ... "नादनिस्वाननिस्वना" इत्यमरः, पयोधरैर्मेघैः तडिद्भिर्विद्युद्भिश्च भृशमत्यन्तमुद्वेजितमुद्विग्नं चेतोऽन्तःकरणं यासां तास्तथोक्ता योषितो नार्यः "योषिदबलायोषा नारी सीमन्तिनी वधू" रित्यमरः, कृतः अपराधोऽन्याय: परवनितानिरीक्षणादिर्यैस्तान् कृतापराधानपि प्रियान् शयने निरन्तरं निरवकाशं यथा भवति तथा परिष्वजन्ते आलिङ्गन्त इत्यर्थः ॥ ११ ॥

त्रिलोचनेति । त्रिलोचनानि नेत्राणि इन्दीवराणीव नीलोत्पलानीवेति विलोचनेन्दीवराणि तेषां ये वारिविन्दवो जलविन्दवस्तैः कृत्वा निषिक्ताः संसिक्ता बिम्बाधराः बिम्बसदृशाधरास्त्वारुपल्लवा इवेति ते यासां तास्तथोक्ताः

विपाण्डुरं कीटरजस्तृणान्वितं
भुजङ्गवद्वक्रगतिप्रसर्पितम् ।
ससाध्वसैर्भेककुलैर्निरीक्षितं
प्रयाति निम्नाऽभिमुखं नवोदकं ॥ १३ ॥

विपन्नपुष्पां नलिनीं समुत्सुका
विहाय भृङ्गाः श्रुतिहारिनिस्वनाः ।
पतन्ति मूढाः शिखिनां प्रनृत्यतां
कलापचक्रेषु नवोत्पलाऽऽशया ॥ १४ ॥

---

बिम्बपदेनाऽऽधररक्तत्वं पल्लवपदेन च कोमलत्वं व्यज्यते, निरस्तानि त्यक्तानि माल्यानि आभरणानि भूषणानि अनुलेपनानि चन्दनादीनि यैस्तथोक्ताः, प्रवासिनां प्रोषितानां प्रमदाः स्त्रियः निजरमणसमागमसङ्गजनितसुखे-निराशा आशारहिताः स्थिता आसन्नित्यर्थः ॥ १२ ॥

विपाण्डुरमिति । विपाण्डुरं पाण्डुरवर्णं कीटाश्च रजांसि च तृणानि च तैरन्वितं युक्तं भुजङ्गवत् सर्पवत् वक्रगतिस्तिर्यग्गमनं प्रसर्पितमितस्ततः सञ्चरणशीलं ससाध्वसैः सभयैर्भेककुलैर्मण्डूकसमुदायैः "भेके मण्डूकवर्षाभू-शालूरप्लवदर्दुरा" इत्यमरः, निरीक्षितं विलोकितं नवोदकं नूतनजलं निम्नस्य गम्भीरस्य देशस्याऽभिमुखं "निम्नं गभीरं गम्भीर" मित्यमरः, प्रयाति गच्छतीत्यर्थः ॥ १३ ॥

विपन्नेति । समुत्सुका उत्कण्ठिताः श्रुतेः श्रवणस्य हारी मन आह्लादकरः इति यावत् स्वनः शब्दो येषान्ते

वनद्विपानां नववारिदस्वनै-
र्मदान्वितानां ध्वनतां मुहुर्मुहुः ।
कपोलदेशा विमलोत्पलप्रभाः
सभृङ्गयूथैर्मदवारिभिश्चिताः ॥ १५ ॥

---

तथोक्ताः, मूढाः इदं नलिनं तन्नलिनमिति विचाररहिता भृङ्गाः भ्रमराः "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालय" इत्यमरः, विगतानि पत्राणि दलानि यस्य तादृशं पुष्पं यस्याः सा तां तथोक्तां नलिनीं विहाय त्यक्त्वा प्रनृत्यतां नृत्यं कुर्वतां शिखिनां मयूराणां कलापचक्रेषु बर्हमण्डलेषु नीलोत्पलस्य नूतनकुवलयस्याऽऽशया पतन्ति निपतन्तीत्यर्थः ॥ १४ ॥

वनद्विपानामिति । नवाः सद्यः संभृतसलिलाः ये वारिदा जलदा तेषां स्वनैर्निनादैः "शब्दे निनादनिनदध्वनिध्वानरवस्वना" इत्यमरः, कृत्वा मदान्वितानामपवारणगर्जनशङ्कयेति भावः, अत एव मुहुर्मुहुः वारं वारं ध्वनतां गर्जतां वनद्विपानामारण्यगजानां "मतङ्गजो गजो नाग" इत्यमरः, विमलानि निर्मलानि यान्युत्पलानि कुवलयानि तेषां प्रभेव प्रभा येषां ते तथोक्ताः "स्यादुत्पलं कुवलय" मित्यमरः, कपोलदेशाः सभृङ्गयूथैर्भ्रमरसमुदायसहितैः मदवारिभिर्दानोद्रेकैः चिता व्याप्ता इत्यर्थः सौगन्ध्यातिशयाद्भ्रमरैरप्यागत्य तत्र स्थितमिति भावः ॥ १५ ॥

२ ऋतु

सितोत्पलाभाम्बुदचुम्बितोपलाः
समाचिताः प्रस्रवणैः समन्ततः ।
प्रवृत्तनृत्यैः शिखिभिः समाकुलाः
समुत्सुकत्वं जनयन्ति भूधराः ॥ १६ ॥
कदम्बसर्ज्जार्ज्जुनकेतकीवनं
प्रकम्पयंस्तत्कुसुमाधिवासितः ।

---

सितेति । सितानि शुभ्राणि यान्युत्पलानि कुव-लयानि तेषाम् इवाभेव आभा कान्तिः येषां तादृशा ये अम्बुदा जलदा तैश्चुम्बिता उपलाः पाषाणाः येषां ते तथोक्ताः "पाषाणप्रस्तरग्रावोपलाश्मान" इत्य-मरः, समन्तत इतस्ततः प्रस्रवणैर्निर्झरैः "उत्सः प्रस्र-वणं वारि प्रवाहो निर्झरो झर" इत्यमरः, समाचिताः व्याप्ताः, प्रवृत्तमारब्धं नृत्यं नर्त्तनं यैस्तथोक्तैः "लास्यं नृत्यं च नर्त्तन" मित्यमरः, शिखिभिर्मयूरैः समाकुला व्याकुला भूधराः समुत्सुकत्वं चित्तक्षोभं शेषः, जनय-न्त्युत्पादयन्तीत्यर्थः ॥ १६ ॥

कदम्बेति । कदम्बो नीपः सर्ज्ज अश्वकर्णः अर्ज्जुनः ककुभः केतकी च तासां वनं समुदायम् । "नीपप्रिय-कदम्बास्तु हलिप्रिय" इत्यमरः, "साले तु सर्ज्जकार्श्याश्व-कर्णका सस्यसम्बर" इत्यमरः, कुन्दद्रुः ककुभोऽर्ज्जुन" इत्य-मरः, विकम्पयन् तेषां पूर्व्वोक्तद्रुमाणां कुसुमैः पुष्पैरधि-वासितः सञ्जाताधिवासः सश्रीकरो जलकणसहितः यः

सपीकराम्भोधरसङ्गशीतलः
समीरणः कन्न करोति सोत्सुकम्॥ १७॥
शिरोरुहैः श्रोणितटावलम्बिभिः
कृतावतंसैः कुसुमैः सुगन्धिभिः।
स्तनैः सहारैर्व्वदनैः ससीधुभिः
स्त्रियो रतिं सञ्जनयन्ति कामिनाम्॥ १८॥
तड़िल्लताशक्रधनुर्व्विभूषिताः
पयोधरास्तोयभरावलम्बिनः।

---

अम्भोधरो मेघस्तस्य सङ्गेन संसर्गेण शीतलः शीतः समीरणो मारुतः "समीरमारुतमरुज्जगत्प्राणसमीरणा" इत्यमरः, कं पुरुषं सोत्सुकं सोत्कण्ठं न करोति अपि तु सर्व्वमेवेत्यर्थः॥ १७॥

शिरोरुहैरिति। स्त्रियस्तरुण्यः श्रोणितटे कटिपश्चाद्भागेऽवलम्बन्ते तैस्तथोक्तैः शिरोरुहैश्चिकुरैः "चिकुरः कुन्तलो वालः कचः केशः शिरोरुह" इत्यमरः, कुसुमैः पुष्पैः "पुष्पम्प्रसूनं कुसुम" मित्यमरः, सहारैः कुसुममालासहितैः स्तनैः कुचैः ससीधुभिर्म्मधुसहितैः वदनैराननैः कामिनां विलासिनां रतिं प्रीतिं सञ्जयनन्ति सम्यक् प्रकारेणोत्पादयन्तीत्यर्थः॥ १८॥

तड़िल्लतेति। तड़िल्लता लताकारा तड़ित् शक्रधनुरिन्द्रायुधं च ताभ्यां भूषिताः शोभिताः "इन्द्रायुधं शक्र-

स्त्रियश्च काञ्चीमणिकुण्डलोज्ज्वला
हरन्ति चेतो युगपत्प्रवासिनाम् ॥ १९ ॥
मालाः कदम्बनवकेशरकेतकीभि-
रापोजिताः शिरसि बिभ्रति योषितोऽद्य।
कर्णान्तरेषु ककुभद्रुममञ्जरीभि-
रिच्छानुकूलरचितानवतंसकांश्च ॥ २० ॥

---

धनु” रित्यमरः। तोयभरेण जलभारेण अवलम्बिनो नम्राः पयोधराः मेघाः काञ्ची मेखला च मणिकुण्डलानि नानाविधरत्नखचितताटङ्कानि च तैरुज्ज्वलाः सुन्दराः स्त्रियश्च प्रवासिनां प्रोषितानां चेतोऽन्तःकरणं युगपत्सममेव हरन्ति अपहरन्तीत्यर्थः, स्त्रियश्चात्र परकीयाः प्रवासिनां स्वकीयासान्निध्याभावात् ॥ १९ ॥

माला इति। योषितः स्त्रियोऽद्य कदम्बानि कदम्बकुसुमानि नवकेशराणि नूतनबकुलकुसुमानि केतक्यश्च ताभिरापोजिताः ग्रथिताः “अथ केशरे बकुल” मित्यमरः, मालाः स्रजः शिरसि मूर्द्धनि ककुभद्रुमोऽर्ज्जुनवृक्षस्तस्य मञ्जरीभिः कलिकाभिः इच्छया अनुकूलं यथा भवति तथा रचितान् कृतान् अवतंसा एव अवतंसका तान् कर्णान्तरेषु कर्णोपरिभागेषु बिभ्रति दधतीत्यर्थः, वसन्ततिलक वृत्तमेतत् “ज्ञेयं वसन्ततिलकन्तभजाजगौग” इति ॥ २० ॥

कालागुरुप्रचुरचन्दनचर्च्चिताङ्ग्यः
पुष्पावतंससुरभीकृतकेशपाशाः ।
श्रुत्वा ध्वनिं जलमुचां त्वरितं प्रदोषे
शय्यागृहं गुरुगृहात्प्रविशन्ति नार्य्यः ॥ २१ ॥
कुवलयदलनीलैरुन्नतैस्तोयनम्रै-
र्मृदुपवनविधूतैर्मन्दमन्दं चलद्भिः ।
अपहृतमिव चेतस्तोयदैः सेन्द्रचापैः
पथिकजनवधूनां तद्वियोगाकुलानाम् ॥ २२ ॥

---

कालागुर्व्वीति । कालागुरुः कृष्णागुरुः स प्रचुरो बहुलो यस्मिन् तादृशं यच्चन्दनं तेन चर्च्चितं लिप्तम् अङ्गं शरीरं यासां तास्तथोक्ताः पुष्पावतंसेन कुसुमकर्णपूरेण सुरभीकृतः सुगन्धीकृतः केशपाशः कुन्तलसमूहो यासां तास्तथोक्ताः, नार्य्यः स्त्रियः जलमुचां घनानां ध्वनिं श्रुत्वा आकर्ण्य त्वरितं शीघ्रं प्रदोषे रजनीमुखे गुरुगृहात् श्वशुरगृहं परित्यज्य शय्यागृहं प्रविशन्तीत्यर्थः ॥ २१ ॥

कुवलयेति । कुवलयस्य नीलोत्पलस्य दलं पत्रमिव नीलैः श्यामवर्णैः उन्नतैरुच्चैस्तोयनम्रैर्जलनम्रैर्मृदुना लघुना पवनेन वातेन विधूताः कम्पिताः तैः, अत एव मन्दमन्दमतिमन्थरं चलद्भिर्गच्छद्भिः सेन्द्रचापैरिन्द्रधनुषा सहितैः तोयदैः मेघैः तेषां पान्थजनानां वियोगेन विर-

मुदित इव कदम्बैर्जातपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव ।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकच्छिन्नतापो वनान्तः ॥ २३ ॥
शिरसि वकुलमालां मालतीभिः समेतां
कुसुमितनवपुष्पैः यूथिकाकुड्मलैश्च ।

---

हेतु आकुला व्याकुलास्तासां पथिकजनवधूनां विरहिणीनां चेतोऽन्तःकरणम् अपहृतमिव हृत्वानीतमित्युत्प्रेक्षा ॥ २२ ॥

मुदित इति । नवस्य नूतनस्य सलिलस्य निषेकेण सेवनेन च्छिन्नः उच्छिन्नस्तापो यस्य सः तथोक्तो वनान्तः अरण्यप्रान्तो जातपुष्पैः प्रादुर्भूतकुसुमैः कदम्बैर्नीपवृक्षैः मुदित इव समन्तात् इतस्ततः पवनेन वायुना चलिता कम्पिता शाखा यैस्तथोक्तैः शाखिभिर्वृक्षैः "वृक्षो महीरुहः शाखी विटपी पादपस्तरु" रित्यमरः । नृत्यतीव नृत्यं करोतीवेत्युत्प्रेक्षा एवमन्यत्रापि केतकीनां सूचिभिः कण्टकैः हसितमिव हास्यमिव विधत्ते दधातीत्यर्थः ॥ २३ ॥

शिरसीति । जलदानां मेघानामोघः सङ्घातो यस्मिन् स तथोक्तः "स्तोमौघनिकरव्रातवातसङ्घातसञ्चया" इत्यमरः । एष कालो वर्षाकालः कान्तवत्प्रयाति वधूनां स्त्रीणां शिरसि मूर्द्धनि मालतीभिर्मालतीकुसुमैः समेतां

विकचनवकदम्बैः कर्णपूरं वधूनां
रचयति जलदौघः कान्तवत्काल एषः ॥ २४ ॥
दधति वरकुचाग्रैरुन्नतैर्हारयष्टिं
प्रतनुसितदुकूलान्यायतैः श्रोणिबिम्बैः ।
नवजलकणसेकादुद्गतां रोमराजीं
ललितवलिविभागैर्मध्यदेशैश्च नार्य्यः ॥२५॥

---

मुक्तां बकुलमालां केसरस्रजं रचयति करोति, तथा विकसितपद्मैः संफुल्लनूतनकुसुमैर्यूथिकाया मागधीलतायाः कुट्मलानि मुकुलानि तैः "अथ मागधी गणिका यूथिका" इत्यमरः । "कुट्मलो मुकुलोऽस्त्रिया" मित्यमरः । विकचानि विकसितानि नवानि नूतनानि यानि कदम्बानि कदम्बकुसुमानि तैश्च कर्णपूरं कर्णावतंसं रचयति करोतीत्यर्थः ॥ २४ ॥

दधतीति । नार्य्यः स्त्रियः उन्नतैर्वरा उत्तमाः पीना वर्तुलाश्चेति यावत् ये कुचाः स्तनाः तेषामग्रैरग्रभागैर्हारयष्टिं मुक्ताहारं आयतैः दीर्घैः श्रोणिबिम्बैः कटिपश्चाद्भागैः प्रतनूनि सूक्ष्माणि सितानि श्वेतवर्णानि यानि दुकूलानि वस्त्राणि तानि ललितानां सुन्दरावलीनां त्रिवलीनां विभागा विभङ्गा येषु तैस्तथोक्तैः मध्यदेशैर्नवानाम्बुकणानां सेकादुद्गताम् उत्पन्नां रोमराजीं रोमाञ्चपङ्क्तिन्दधतीत्यर्थः ॥ २५ ॥

नवजलकणसङ्गाच्छीततामादधानः
कुसुमभरनतानां लासकः पादपानाम् ।
जनितरुचिरगन्धः केतकीनां रजोभिः
परिहरति नभस्वान् प्रोषितानां मनांसि ॥ २६ ॥

जलधरविनतानामाश्रयोऽस्माकमुच्चै-
रयमिति जलसेकैस्तोयदास्तोयनम्राः ।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः
समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ॥ २७ ॥

---

नवेति । नवानां नूतनानां जलकणानां सङ्गात् सम्बन्धात् शीततां शैत्यमादधानः कुसुमानां पुष्पाणां भरेण नता नम्रा स्तेषां तथोक्तानां पादपानां वृक्षाणां लासकः संसर्गवान् एतेन मान्द्यमुक्तं केतकीनां रजोभिः परागैः "परागः सुमनोरज" इत्यमरः । जनित इत्यादिना रुचिरः सुन्दरो गन्धो यस्मिं स्तथोक्तो नभस्वान् वायुः प्रोषितानां पान्थजनानां मनांस्यन्तःकरणानि परिहरतीत्यर्थः ॥ २६ ॥

जलधरेति । तोयनम्रा जलभारनताः तोयदा मेघा जलधरेण नतानां नम्रणामस्माकमुच्चैरुन्नतो यो विन्ध्याचलो आश्रय आधारो भवतीति शेषः, इतीति हेतो रतिशयमत्यन्तं परुषाः कठिनास्ताभिस्तथोक्ताभिर्ग्रीष्मवह्नेः शिखाभिः सम्यक् उपजनित उत्पादितस्तापः सन्तापो यस्य तं तथोक्तं विन्ध्यं विन्ध्याद्रिं जलसेकैः जलवर्षणैः

बहुगुणरमणीयः कामिनीचित्तहारी
तरुविटपलतानां बान्धवो निर्व्विकारः ।
जलदसमय एष प्राणिनां प्राणभूतो
दिशतु तव हितानि प्रायशो वाञ्छितानि ।२८॥

इति श्रीकालिदासकविवराग्रणीविरचिते ऋतुसंहारे
प्रावृट्वर्णने द्वितीयः सर्गः ॥२॥

---

ह्लादयन्ति हर्षं प्रापयन्तीवेत्युत्प्रेक्षा उन्नतो हि विपन्नं परमुपकरोतीति भावः ॥ २७ ॥

बहुगुणेति । बहुगुणै रमणीयः सुन्दरः कामिनीनाम् अङ्गनानां चित्तहारी मनोऽनुरञ्जक इति यावत्, तरुविटपाः वृक्षशाखाः लता वल्लयश्च तासां क्वचित् पुस्तके नतविटपिलतानामिति पाठः । तदर्थस्तु नता नम्रा ये विटपिनः शाखिनो लताश्च "वल्ली तु व्रततिर्लते" त्यमरः तासां बान्धवः, जलवृष्टितीव्रातपजनितविविधविपत्परिहाररूपबन्धुकार्य्यंवर्त्तीति यावत् निर्व्विकारः विकारशून्यः प्राणिनां जन्तूनां "प्राणी तु चेतनो जन्मी जन्तु जन्यु शरीरिण" इत्यमरः। प्राणभूतो जीवभूत एष जलदसमयो वर्षाकालः तव प्रायशो बहुशः वाञ्छितान्यभिलषितानि इष्टानि दिशतु ददातु इत्यर्थः ॥ १८ ॥

इति श्रीभारद्वाजगोत्रोत्पन्नमणिरामविरचितायामृतु-
संहारव्याख्यायां द्वितीयः सर्गः ॥ २ ॥



# शरद्वर्णनन्नाम

तृतीयः सर्गः ।

काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरा तनुगात्रयष्टिः
प्राप्ता शरन्नववधूरिव रूपरम्या ॥ १ ॥

---

अथ क्रमप्राप्तं शरत्कालं वर्णयति । काशांशुकेति । काशमेव काशकुसुममेव अंशुकं वस्त्रं यस्याः सा तथोक्ता पक्षे काशमेवांशुकं वस्त्रं यस्याः सेति, विकचं विकसितं यत्पद्मं तदेव मनोज्ञं सुन्दरं वक्त्रं मुखं यस्याः सेति, "प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः फुल्लश्चैते विकसित" इत्यमरः। "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुख"मित्यमरः। सोन्मादानाम् उन्मादसहितानां हंसानां रवः शब्द एव नूपुरनादो मञ्जीरध्वनिस्तेन रम्या रमणीया पक्षे उन्मादहंस इव नूपुरनादस्तेन रम्या "शब्दे निनादनिनदध्वनिध्वानरवस्वना" इत्यमरः। 'मञ्जीरं नूपुरोऽस्त्रिया" मित्यमरः। आ समन्तात् परिणता पक्वा

काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि।
सप्तच्छदैः कुसुमभारनतैर्वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः॥ २॥
चञ्चन्मनोज्ञशफरीरसनाकलापाः
पर्यन्तसंस्थितसिताण्डजपङ्क्तिहाराः।

---

शालिरिव रुचिरा सुन्दरा तन्वी गात्रयष्टिः शरीरलता यस्याः पक्षे आपक्वशालिरिव रुचिरा गात्रं वपुः संहननं "शरीरं वर्ष्म विग्रहः" इत्यमरः। रूपरम्या रूपेण सौन्दर्येण रम्या शरन्नवबधूरिव प्राप्ता आगतेत्यर्थः। वसन्ततिलकवृत्तम्॥ १॥

काशैरिति। काशैः काशपुष्पैः मही पृथ्वी शिशिरदीधितिना चन्द्रेण रजन्यो रात्रयो हंसैः सरितां जलानि कुमुदैः कैरवैः "सिते कुमुदकैरवे" इत्यमरः। सरांसि कासाराः "कासारः सरसी सरः" इत्यमरः। कुसुमभारेण पुष्पभारेण नता नम्रा तैः सप्तच्छदैः सप्तपर्णैः वृक्षविशेषैः वनान्ता अरण्यप्रान्ता मालतीभिर्जातीभिश्च "सुमना मालती जाती" इत्यमरः। उपवनानि आरामाः "आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इत्यमरः। शुक्लीकृतानीति लिङ्गवचनविपरिणामेनान्वयः॥२॥

चञ्चदिति। चञ्चती चञ्चला मनोज्ञा सुन्दरी शफ-

नद्यो विशालपुलिनान्तनितम्बबिम्बा
मन्दं प्रयान्ति समदाः प्रमदा इवाऽद्य ॥ ३ ॥

व्योम क्वचिद्रजतशङ्खमृणालगौरै
स्त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः ।
संलक्ष्यते पवनवेगचलैः पयोदै-
राजेव चामरवरैरुपवीज्यमानः ॥ ४ ॥

---

र्यैव प्रोष्ठ्येव रशनाकलापः काञ्चीगुणो यासां ता स्तथोक्ताः पक्षे चञ्चन्मनोज्ञशफरीव रशनाकलापो यासां ताः "प्रोष्ठी तु शफरी द्वयो" रित्यमरः। पर्य्यन्ते प्रान्तभागे संस्थिता उपविष्टा या सिताण्डजानां धवलमरालादीनां पंक्तिः श्रेणी सैव हारो यासां ता स्तथोक्ताः "पंक्तिः श्रेणी लेखास्तु राजय" इत्यमरः। पक्षे पर्य्यन्तस्थितसिताण्डजा पङ्क्तिरेव हारो यासां ताः विशालो विस्तीर्णो यः पुलिनान्तः तीरप्रान्तः स एव नितम्बबिम्बं कटिपश्चाद्भागो यासां ताः तथोक्ताः नद्यः सरितः "अथ नदी सरि" दित्यमरः। समदाः प्रमदाः स्त्रिय इव मन्दं मन्थरं यथा भवति तथा प्रयान्ति गच्छन्तीत्यर्थः ॥ ३ ॥

व्योमेति। त्यक्तम् अम्बु यै स्तथोक्तैः अत एव रजतं च शङ्खश्च मृणालं च रजतशङ्खमृणालानि तानीव गौरवर्णा स्तै स्तथोक्तै लघुतया शतशः प्रयातैः पवनस्य वायोर्वेगेन चलाश्चञ्चला स्तै स्तथोक्तैः पयोदै व्योम आकाशं

भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं
बन्धूकपुष्परचिताऽरुणता च भूमिः।
वप्राश्च चारुकमलावृतभूमिभागाः
प्रोत्कण्ठयन्ति न मनो भुवि कस्य यूनः॥ ५॥
मन्दानिलाकुलितचारुतराग्रशाखः
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः।

---

कश्चित् कुत्रचिद्भागे चामरवरैश्चामरश्रेष्ठैरुपवीज्यमानो राजेव संलक्ष्यते दृश्यते इत्यर्थः॥ ४॥

भिन्नेति। भिन्नः मर्दितः योऽञ्जनप्रचयः कज्जलसमूहः तद्वत्कान्तिर्यस्य तत् तथोक्तं मनोज्ञं सुन्दरं नभः आकाशं बन्धूकानां बन्धुजीवकानां पुष्पैः कुसुमैः रचिता कृता अरुणता यस्याः सा तथोक्ता "बन्धूको बन्धुजीवक" इत्यमरः। भूमिश्च चारूणि सुन्दराणि यानि कमलानि तैरावृता आच्छादिता भूमिभागा येषां ते तथोक्ताः वप्राः प्राकाराश्च "स्याच्चयो वप्रमस्त्रियां प्राकारो वरणः शाल" इत्यमरः। भुवि कस्य यूनः मनो न प्रोत्कण्ठयन्ति प्रोत्कर्षेण नोत्कण्ठयन्ति अपि तु सर्वस्यापीति विभक्तिविपरिणामेनान्वयः॥ ५॥

मन्देति। मन्देन मन्थरेणाऽनिलेन पवनेनाऽऽकुलिता चारुतराः अति सुन्दरा अग्रशाखाः शाखानामग्रभागा यस्य स तथोक्तः पुष्पोद्गमस्य कुसुमप्रादुर्भावस्य प्रचयेनाभि-

मत्तद्विरेफपरिपीतमधुप्रसेक-
श्चित्तं विदारयति कस्य न कोविदारः ॥ ६ ॥

तारागणप्रवरभूषणमुद्वहन्ती-
मेघावरोधपरिमुक्तशशाङ्कवक्त्रा ।
ज्योत्स्नादुकूलममलं रजनी दधाना
वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला ॥ ७ ॥

कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसकुलाकुलतीरदेशाः ।

---

क्येन कोमलानि मृदूनि पल्लवाग्राणि यस्य स तथोक्तो मत्तद्विरेफैरुन्मत्तभ्रमरैः परिपीतो मधुप्रसेको मकरन्दप्रस्रवो यस्य स तथोक्तः कोविदारश्चमरिकवृक्षः "कोविदारे चमरिकः कुद्दालो युगपत्रक" इत्यमरः । कस्य चित्तं न विदारयति अपि तु सर्व्वस्यापि विदीर्णं करोतीत्यर्थः ॥ ६ ॥

तारागणेति । तारागणो नक्षत्राणां गणः समुदाय एव प्रवरमुत्तमं भूषणं, पक्षे तारागण इव प्रवरं भूषणं, "नक्षत्रमृक्षं भन्तारे" त्यमरः । उद्वहन्ती दधती मेघैः कृतो योऽवरोधो व्यवधानं तस्मात्परिमुक्तो यः शशाङ्कश्चन्द्रः स एव वक्त्रं वदनं यस्याः सा पक्षे ज्योत्स्नेव दुकूलं यस्याः सेति "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । दधाना, "रजनी यामिनी तमि" रित्यमरः । प्रमदा बालेवानुदिनं प्रतिदिनं वृद्धिं प्रयाति गच्छतीत्यर्थः ॥ ७ ॥

कुर्वन्ति हंसविरुतैः परितो जनस्य
प्रीतिं परां कमलरेणुहृतास्तटिन्यः ॥ ८ ॥
नेत्रोत्सवो हृदयहारिमरीचिमालाः
प्रह्लादकः शिशिरशीकरवारिवर्षी।
पत्युर्व्वियोगविषदग्धशरक्षतानां
चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ॥ ९ ॥

---

कारण्डवेति। कारण्डवानां पक्षिविशेषाणाम् आननैर्व्विघट्टिता वीचिमाला तरङ्गपंक्तयो यासु तास्तथोक्ताः "भङ्गस्तरङ्ग ऊर्म्मिर्वा स्त्रियां वीचि" रित्यमरः। कादम्बानां कलहंसानां पुष्कराह्वानां च समुदायेन आकुलो व्याकुलः तीरदेशो यासां तास्तथोक्ताः "कादम्बः कलहंसः स्या" दित्यमरः। "पुष्कराह्वस्तु सारसः" इत्यमरः। कमलानां सरोरुहाणां रेणुभिः रजोभिः अरुणिताः आरक्ताः "परागः सुमनो रज" इत्यमरः। तटिन्यस्तरङ्गिण्यः "तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी" त्यमरः। परितः सर्व्वतो हंसानां मरालानां विरुतैः शब्दैः "तिरश्चां वाशितं रुत" मित्यमरः, जनस्य लोकस्य परामुत्कृष्टां प्रीतिं कुर्व्वन्ति जनयन्तीत्यर्थः ॥ ८ ॥

नेत्रोत्सव इति। नेत्राणां लोचनानाम् उत्सवो हर्षजनकः "लोचनं नयनं नेत्र" मित्यमरः। हृदयहारिणी मरीचिमाला किरणपंक्ति र्यस्य स तथोक्तः, प्रह्लादका-

आकम्पयन् फलभरानतशालिजालान्
आनर्त्तयंस्तरुवरान् कुसुमावनम्रान्।
उत्फुल्लपङ्कजवनां नलिनीं विधुन्वन्
यूनां मनश्चलयति प्रसभं नभस्वान्॥ १०॥
सोन्मादहंसमिथुनैरुपशोभितानि
स्वच्छप्रफुल्लकमलोत्पलभूषितानि।

---

हर्को हर्षजनकः शिशिरं शीतलं शीकरं वारिकणं वर्षति स तथोक्तश्चन्द्रः पत्युः प्रियस्य वियोगो विरहएव विषदिग्धशरो वाणस्तेन क्षता व्रणिताः तासां तथोक्तानामङ्गनानां विरहिणीनां तनुं शरीरम् अतितरामत्यन्तं दहति सन्तापयतीत्यर्थः॥ ९॥

आकम्पयन्निति। फलानां भरेण भारेण आनता नम्रा ये शालिजालाः शालिसमूहास्तानाकम्पयन्; तरुवरान् वृक्षश्रेष्ठानानर्त्तयन्, एतेन पवने मान्द्यमावेदितम्, उत्फुल्लानि पङ्कजानि कमलानि यस्मिन् तादृशं वनं जलं यस्यां तां तथोक्ताम् "जलं पयः कीलालममृतं जीवनं भुवनं वन"मित्यमरः, नलिनीं कमलिनीं विधुन्वन्, एतेन तस्मिन् सौगन्ध्यं शैत्यं चावेदितं, नभस्वान् वायुः, यूनां तरुणानां मनः प्रसभमत्यन्तं चलयति चञ्चलयतीत्यर्थः।१०॥

सोन्मादेति। सोन्मादानामुन्मादसहितानां हंसानां मरालानां मिथुनैर्द्वन्द्वैरुपशोभितानि भूषितानि, मन्देन

मन्दप्रभातपवनोद्गतवीचिमाला-
ऽन्युत्कण्ठयन्ति सहसा हृदयं सरांसि ॥ ११ ॥
नष्टं धनुर्बलभिदो जलदोदरेषु
सौदामिनी स्फुरति नाद्य वियत्पताका ।
धुन्वन्ति पक्षपवनै र्न नभो बलाकाः
पश्यन्ति नोन्नतमुखा गगनं मयूराः ॥ १२ ॥

---

मन्दरेण प्रभातपवनेन उषःकालीनेनोद्गता उत्पन्ना वीचिमालास्तरङ्गपंक्तयो येषु तानि तथोक्तानि सरांसि सरोवराणि जनानामिति शेषः, हृदयं उत्कण्ठयन्ति उत्कण्ठायुक्तं कुर्व्वन्तीत्यर्थः ॥ ११ ॥

नष्टमिति । अद्य जलदानां मेघानाम् उदरेषु दृश्यमानमिति शेषः । बलभिदो बलनामकं दैत्यं भिनत्ति विदारयति हन्तीति यावत्, तस्य बलभिदो बलारातेरिन्द्रस्य धनुः कार्मुकं नष्टं गतं न दृश्यत इत्यर्थः । वियत आकाशस्य पताका सौदामिनी तड़ित् न स्फुरति न दीव्यति, बलाकाः "बलाका विसकण्ठिके" त्यमरः । पक्षाणां पत्राणां पवनै र्वातैः "गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुह" मित्यमरः । नभो न धुन्वन्ति न कम्पयन्ति उन्नतमूर्द्धं मुखं वदनं मेघदिदृक्षया येषां ते तथोक्ताः मयूरा बर्हिणो गगनमाकाशं न पश्यन्ति नावलोकयन्तीत्यर्थः ॥ १२ ॥

नृत्यप्रयोगरहिताञ्छिखिनो विहाय
हंसानुपैति मदनो मधुरप्रगीतान्।
मुक्त्वा कदम्बकुटजार्ज्जुनसर्ज्जनीपान्
सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥ १३ ॥
शेफालिकाकुसुमगन्धमनोहराणि
स्वस्थस्थिताऽण्डजकुलप्रतिनादितानि।

---

नृत्येति। मदनः कन्दर्पो नृत्यप्रयोगेन नर्त्तनप्रयोगेन रहितान् शिखिनो बर्हिणो विहाय, त्यक्त्वा मधुरं प्रगीतं गानं येषां तांस्तथोक्तान् हंसानुपैति प्राप्नोति, कुसुमानां पुष्पाणाम् उद्गम उत्पत्तिः तस्याः श्रीः शोभा कदम्बो धूलिकदम्बः कुटजः शक्रनामको वृक्षविशेषः अर्ज्जुनः ककुभवृक्षः सर्ज्जः शालवृक्षो नीपः पूर्वोक्तः कदम्बभिन्न-कदम्बः तान् "अथ कुटजः शक्र" इत्यमरः। "इन्द्रद्रुः ककुभोऽर्ज्जुन" इत्यमरः। मुक्त्वा त्यक्त्वा सप्तच्छदान् सप्त-पर्णवृक्षान् उपगता प्राप्ता इत्यर्थः ॥ १३ ॥

शेफालिकेति। शेफालिका सुवहा तस्याः कुसुमानां पुष्पाणां गन्धेन मनोहराणि सुन्दराणि। "शेफालिका तु सुवहा निर्गुण्डी नीलिका च से" त्यमरः। स्वस्थ-मनुद्वेगं तीव्रतरतापदावानलादिदुःखाभावात् यथा भवति तथा स्थितानामुपविष्टानाम् अण्डजानां पक्षिणां कोकिलादीनां कुलैः समुदायैः प्रतिनादितानि पर्य्यन्ते

पर्य्यन्तसंस्थितमृगीनयनोत्पलानि
प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥ १४ ॥
कह्लारपद्मकुमुदानि मुहुर्विधुन्वं-
स्तत्सङ्गमादधिकशीतलतामुपेतः ।
उत्कण्ठयत्यतितरां पवनः प्रभाते
पत्रान्तलग्न (तुहिनाम्बुविधूयमानः) ॥ १५ ॥
सम्पन्नशालिनिचयाऽऽवृतभूतलानि
स्वस्थस्थितप्रचुरगोकुलशोभितानि ।

---

प्रान्ते स्थितानां मृगीणां हरिणीनां नयनानि लोचनान्य-
वोत्पलानि कुवलयानि येषु तानि तथोक्तानि उपवनानि
पुंसां मनांसि उत्कण्ठयन्तीत्यर्थः ॥ १५ ॥

कह्लारेति । कह्लारपद्मकुमुदानि कह्लारं सौगन्धा-
धिकं पद्मं नलिनं कुमुदं कैरवं तानि । "सौगन्धिकं तु
कह्लार" मित्यमरः । "वा पुंसि पद्मं नलिन" मित्यमरः ।
"सिते कुमुदकैरवे" इत्यमरः । मुहुर्वारं वारं विधुन्वन्
तेषां सङ्गमात्संस्पर्शादधिकमत्यन्तं शीतलतामुपेतः प्राप्तः,
पत्रान्ते दलमान्ते लग्नं यत्तुहिनाम्बु हिमजलं तद्विधूयते
स तथोक्तः पवनो वायुः प्रभाते प्रातःकाले अतितरामत्य-
न्तमुत्कण्ठयति उत्सुकयतीत्यर्थः ॥ १५ ॥

---

(तुहिनानि हरत्सद्मणाम् इति वा पाठः)

हंसैः ससारसकुलैः प्रतिनादितानि
सीमान्तराणि जनयन्ति नृणां प्रमोदम् ॥ १६ ॥
हंसैर्जिता सुललिता गतिरङ्गनाना-
मम्भोरुहैर्विकसितैर्मुखचन्द्रकान्तिः ।
नीलोत्पलैर्मदकलानि विलोकितानि
भ्रूविभ्रमाश्च रुचिरास्तनुभिस्तरङ्गैः ॥ १७ ॥
श्यामालताः कुसुमभारनतप्रवालाः
स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम् ।

---

सम्पन्नेति । सम्पन्नानां जलानां शालीनां निचयेन समूहेनाऽऽवृतानि छादितानि भूतलानि येषां तानि तथोक्तानि, स्वस्थमनुद्वेगं स्थितानां प्रचुराणां बहूनां गवाकुलैः समुदायैः शोभितानि भूषितानि, सारसानां पक्षिविशेषाणां कुलैः सहितास्तैस्तथोक्तैः हंसैः प्रतिनादितानि सीमान्तराणि, नृणां प्रमोदं हर्षञ्जनयन्त्युत्पादयन्तीत्यर्थः ॥ १६ ॥

हंसैरिति । अङ्गनानां पुरन्ध्रीणां सुललिताऽत्यन्तं रमणीया गतिर्हंसैर्जिता मुखचन्द्रस्य वदनचन्द्रस्य कान्तिः शोभा विकसितैर्विकचैरम्भोरुहैर्जिता मदेन कलानि मधुराणि विलोकितान्यवलोकितानि नीलोत्पलैर्जितानि रुचिरा सुन्दरा भ्रूविभ्रमाश्च तनुभिः सूक्ष्मैः तरङ्गैर्वीचिभिर्जिता इति लिङ्गवचनपरिणामेनाऽन्वयः ॥ १७ ॥

दन्ताऽवभासविशदस्मितचन्द्रकान्तिं
कङ्केलिपुष्परुचिरा नवमालिकेव ॥ १८ ॥
केशान्नितान्तघननीलविकुञ्चिताग्रा-
न्नापूरयन्ति वनिता नवमालतीभिः ।
कर्णेषु च प्रवरकाञ्चनकुट्मलेषु
नीलोत्पलानि विविधानि निवेशयन्ति ॥ १९ ॥

---

श्यामा इति । कुसुमानां पुष्पाणां भारेण नता नम्राः प्रवालाः पल्लवा यासान्तास्तथोक्ताः, श्यामा हरिद्वर्णास्तत्र मध्ये याच लता व्रतत्यो "वल्ली तु व्रततीर्लते" त्यमरः । स्त्रीणां नारीणां श्रृतानि भूषणानि यै स्तेषां बाहूनां कान्तिं शोभां हरन्ति कङ्केलिपुष्परुचिरा नवमालती नूतनमालिका च दन्तानां रदनानाम् अवभासेन प्रभया विशदं निर्मलं स्मितमेव चन्द्रकान्तिः "रदना दशना दन्ता" इत्यमरः । हरन्तीति विभक्तिविपरिणामेनाऽन्वयः ॥१८॥

केशानिति । वनिताः अवलाः नितान्तमत्यन्तं घनाः सङ्कीर्णाः कृष्णवर्णाः विकुञ्चिताः कुटिला अत एवाऽग्राः श्रेष्ठाः तान् तथोक्तान् केशान् कुन्तलान् "चिकुरः कुन्तलो बालः कचः केशः शिरोरुह" इत्यमरः । नवमालती-भिर्नवमालतीकुसुमैरापूरयन्ति प्रवराणि श्रेष्ठानि काञ्चन-कुट्मलानि स्वर्णताटङ्कादीनि येषु तेषु तथोक्तेषु कर्णेषु श्रवणेषु "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रव"

हारैः सचन्दनरसैः स्तनमण्डलानि
श्रोणीतटं सुविपुलं रसनाकलापैः ।
पादाम्बुजानि कलनूपुरशेखरैश्च
नार्य्यः प्रहृष्टमनसोऽद्य विभूषयन्ति ॥ २० ॥

स्फुटकुमुदचितानां राजहंसस्थितानां
मरकतमणिभासा वारिणा भूषितानाम् ।
श्रियमतिशयरूपां व्योम तोयाऽऽशयानां
वहति विगतमेघं चन्द्रताराऽवकीर्णम् ॥ २१ ॥

---

इत्यमरः । विविधानि विमलानि नीलोत्पलानि इन्दीवराणि निवेशयन्ति स्थापयन्ति अवलम्बयन्तीत्यर्थः ॥ १९ ॥

हारैरिति । प्रहृष्टमनसः प्रहर्षितचेतसो नार्य्यः स्त्रियः अद्य सचन्दनरसैः चन्दनद्रवसहितैः स्तनमण्डलानि कुचमण्डलानि रसनाकलापैः काञ्चीगुणैः सुविपुलं महत् श्रोणीतटं कटिपश्चाद्भागं कलनूपुरशेखरैः उत्तममञ्जीरैः पादाम्बुजानि चरणकमलानि विभूषयन्तीत्यर्थः ॥ २० ॥

स्फुटेति । विगता मेघा यस्मात्तं तथोक्तं चन्द्रश्च तारा नक्षत्राणि च ताभिरवकीर्णं व्याप्तं व्योमाऽऽकाशं स्फुटैर्विकसितैः कुमुदैः कैरवैश्चिता व्याप्ता तेषां तथोक्तानां राजहंसाः हंसविशेषाः स्थिता येषु तेषां तथोक्तानां "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिता" इत्यमरः । मरकतमणेर्भा इव भाः कान्तिर्यस्य तेन तथो-

शरदि कुमुदसङ्गाद्वायवो यान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः ।
विगतकलुषमम्भः श्यामपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥ २२ ॥
दिवसकरमयूखैर्बोध्यमानं प्रभाते
वरयुवतिमुखाभं पङ्कजं जृम्भतेऽद्य ।

---

र्केन वारिणा जलेन भूषितानां शोभितानां तोयाशयानां जलाशयानाम् अतिशयरूपां श्रियं शोभां वहति धत्ते इत्यर्थः । मालिनीवृत्तं तल्लक्षणन्तु पूर्वोक्तम् ॥ २१ ॥

शरदीति । शरदि शरत्काले कुमुदस्य कैरवस्य सङ्गात् संसर्गाच्छीताः शीतला वायवः पवनाः यान्ति वहन्ति, दिग्विभागाः आशाप्रान्ताः "दिशस्तु ककुभः काष्ठा आशाश्च" इत्यमरः । विगतानि जलदानां मेघानां वृन्दानि समूहा येभ्यस्ते तथोक्ता अत एव मनोज्ञाः सुन्दराः अम्भो जलं विगतकलुषं यस्य तत्तथोक्तं निर्मल-मित्यर्थः । धरित्री क्षितिः "धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षिति" रित्यमरः । श्यामपङ्का: व्योम आकाशं विमला निर्म्मला किरणाः मयूखा यस्य तादृशचन्द्रो यत्र तत्तथोक्तं "किरणोस्रमयूखांशुः" इत्यमरः । ताराभि-र्नक्षत्रैर्विचित्रं सुन्दरमित्यर्थः । "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रिया" मित्यमरः ॥ २२ ॥

कुमुदमपि गतेऽस्तं लीयते चन्द्रबिम्बं
हसितमिव वधूनां प्रोषितेषु प्रियेषु ॥ २३ ॥
असितनयनलक्ष्मीं लक्षयित्वोत्पलेषु
क्वणितकनककाञ्चीं मत्तहंसस्वनेषु ।
अधररुचिरशोभां बन्धुजीवे प्रियाणां
पथिकजन इदानीं रोदिति भ्रान्तचेताः ॥२४॥

---

दिवसेति । प्रभाते प्रातःकाले दिवसकरस्य सूर्य्यस्य मयूखैः किरणैः बोध्यमानं विकाश्यमानमित्यर्थः । अत एव वरयुवत्यो युवकयुवत्यो र्मुखस्येव आभा यस्य तत् तथोक्तम्, युवानौ हि पूर्व्वरात्रौ परस्परालिङ्गनचुम्बनाद्युपभोगं कृत्वा प्रभाते स्वस्वमुखदर्शनजनित लज्जास्मितौ जायेते, अतः पद्मसाम्यं मुखस्येत्युपमा । विम्ब "स्युः प्रभा रुट् द्युतिस्त्विड्भाभाश्छविद्युतिदीप्तय" इत्यमरः । पङ्कजं कमलमद्य जृम्भते शोभते कुमुदं कैरवमपि चन्द्रम् अस्तम् अस्ताचलं गते प्राप्ते सति प्रियेषु कान्तेषु वधूनां रमणीनां हसितमिव लीयते क्षीणं भवतीत्यर्थः ॥ २३ ॥

असितेति । पथिकजनः पान्थजनः इदानीं शरत्काले प्रियाणां प्रेयसीनामसितानांकृष्णानान्नेत्राणां लक्ष्मीं शोभां "कृष्णे नीलेऽसितश्यामकालश्यामलमेचका" इत्यमरः । लोचनं नयनं नेत्रम् इत्यमरः । उत्पलेषु

स्त्रीणां विहाय वदनेषु शशाङ्कलक्ष्मीं
कामञ्च हंसवचनं मणिनूपुरेषु।
बन्धूककान्तिमधुरेषु मनोहरेषु
क्वाऽपि प्रयाति सुभगा शरदागमश्रीः ॥२५॥
विकचकमलवक्त्रा फुल्लनीलोत्पलाक्षी
विकसितनवकाशश्वेतवासोवसाना।

---

कमलेषु क्वणन्ती या कनककाञ्ची सुवर्णरसना तां हंसस्वनेषु मरालशब्देषु अधरश्रेष्ठस्य रुचिरा सुन्दरा या शोभा तां बन्धुजीवे बन्धूककुसुमे लक्षयित्वा दृष्ट्वा भ्रान्तचित्तः स रोदिति रोदनं करोतीत्यर्थः ॥ २४ ॥

स्त्रीणामिति। सुभगा सुन्दरा या शोभा शरदागम श्रीः शोभा शशाङ्कस्य चन्द्रस्य लक्ष्मीं शोभां स्त्रीणां सुन्दरीणां वदनेषु मुखेषु कामं रमणीयं हंसवचनं मरालविरुतं मणिनूपुरेषु मणिखचितमञ्जरीषु बन्धूककुसुमस्य कान्तिं च मनोहरेषु सुन्दरेषु अधरेषु विहाय त्यक्त्वा क्वाऽपि कुत्रचिदपि प्रयाति गच्छति इत्यर्थः, एतेन हेमन्तागमः सूचितः ॥ २५ ॥

विकचेति। विकचं विकसितं कमलमेव वक्त्रं मुखं यस्याः सा तथोक्ता पक्षे विकचं कमलमिव वक्त्रं यस्याः सा इति फुल्लानि प्रफुल्लानि नीलोत्पलानीन्दिवराण्येवाक्षी यस्याः सा तथोक्ता पक्षे फुल्लनीलोत्पलानीवाक्षिणि

कुमुदरुचिरकान्ता कामिनीवोन्मदेयं
प्रतिदिशतु शरद्वश्चेतसः प्रीतिमग्र्याम् ॥ २६ ॥

इति कालिदासकृतावृतुसंहारे शरद्वर्णनं-
नाम तृतीयः सर्गः ॥ ३ ॥

---

यस्या इति विकसितं नवकाशं नूतनं काशं काशकुसुम-मेव श्वेतवासः श्वेतवस्त्रं पक्षे विकसित नवकाशमिव श्वेत-वासः वसाना कुमुदेन कैरवेण रुचिरा कान्ति र्यस्याः सा नवोढापक्षे कुमुदमिव रुचिरा कान्ति र्यस्याः सा इयं शरदुन्मदोत्कटमदा कामिनी प्रेयसीवत् चित्तस्याग्रया-मुत्तमां प्रीतिं दिशतु ददात्वित्यर्थः ॥ २६ ॥

इति श्रीभारद्वाजगोत्रोत्पन्नमणिरामविरचितायामृतु-संहारव्याख्यायां तृतीयः सर्गः ॥ ३ ॥



# हेमन्तवर्णनन्नाम

चतुर्थः सर्गः ।

नवप्रवालोद्गमसस्यरम्यः
प्रफुल्ललोध्रः परिपक्वशालिः ।
विलीनपद्मः प्रपतत्तुषारो
हेमन्तकालः समुपागतोऽयम् ॥ १ ॥
मनोहरैः कुङ्कुमरागरक्तै
स्तुषारकुन्देन्दुनिभैश्च हारैः ।

---

अथ क्रमप्राप्तं हेमन्तकालं वर्णयति । नवेति । नवानां नूतनानां प्रवालानां पल्लवानाम् उद्गम उत्पत्तिः सस्यानि च तै रम्यो रमणीयः, प्रफुल्ला सम्फुल्ला लोध्रा लोध्रवृक्षा यस्मिन् स तथोक्तः, परिपक्वा परिणता शालयो यस्मिन् स तथोक्तः, विलीनानि म्लानानि पद्मानि कमलानि यस्मिन् स तथोक्तः, प्रपतत्तुषारो हिमं यस्मिन् स तथोक्तः "तुषारस्तुहिनं हिम" मित्यमरः । अयं हेमन्तः कालः समुपागत आगत प्राप्त इत्यर्थः । उपेन्द्रवज्रा प्रथमौ लघौ सतीति लक्षणात् ॥ १ ॥

मनोहरैरिति । स्तनैः कुचैः शाजते शोभते इति

विलासिनीनां स्तनशालिनीना-
मलं क्रियन्ते स्तनमण्डलानि ॥ २ ॥
न बाहुयुग्मेषु विलासिनीनां
प्रयान्ति सङ्गं वलयाऽङ्गदानि ।
नितम्बबिम्बेषु नवं दुकूलं
तन्वंशुकं पीनपयोधरेषु ॥ ३ ॥

---

स्तनशालिन्य स्तासां तथोक्तानां विलासिनीनां विलासवतीनां स्तनमण्डलानि कुचमण्डलानि मनोहरैः कुङ्कुमस्य काश्मीरजन्मनो रागेण रक्ताः स्तै स्तथोक्तैः "अथ कुङ्कुमं काश्मीरजन्माग्निशिखं वरवाह्लीकपीतन" मित्यमरः। तुषारो हिमं कुन्दः कुन्दकुसुमम् इन्दु श्चन्द्र स्तै र्निभाः सदृशा स्तै स्तथोक्तै र्हारै र्मुक्ताहारैरलंक्रियन्ते इत्यर्थः ॥ २ ॥

नेति। बाहुयुग्मेषु करयुगेषु वलयानि कटकानि अङ्गदानि केयूराणि तानि "कटको वलयोऽस्त्रिया" मित्यमरः। "केयूरमङ्गदं तुल्ये" इत्यपि सङ्गं सम्बन्धं न प्रयान्ति न प्राप्नुवति। नवं नूतनं दुकूलं वस्त्रं नितम्बबिम्बेषु कटिपश्चाद्भागेषु सङ्गं न प्रयान्ति तनु सूक्ष्ममंशुकं वस्त्रं कञ्चुक्यादि, पीनाः परिपुष्टाः ये पयोधराः कुचास्तेषु सङ्गं न प्रयातीति वचनपरिणामेनान्वयः ॥ ३ ॥

काञ्चीगुणैः काञ्चनरत्नचित्रै
र्नो भूषयन्ति प्रमदा नितम्बम्।
न नूपुरैर्हंसरुतं भजद्भिः
पादाम्बुजान्यम्बुजकान्तिभाजि॥ ४॥
गात्राणि कालीयकचर्च्चितानि
सपत्रलेखानि मुखाम्बुजानि।
शिरांसि कालागुरुधूपितानि
भवन्ति नार्य्यः सुरतोत्सवाय॥ ५॥

---

काञ्चीति। प्रमदाः स्त्रियो नितम्बं काञ्चनं स्वर्णं रत्नानि तैः चित्रैः चमत्कृतैः काञ्चीगुणैः रसनाकलापैः र्नो भूषयन्ति नालंकुर्व्वन्ति। तथा अम्बुजस्य कमलस्य कान्तिं भजन्ति तानि तथोक्तानि पादाम्बुजानि चरणकमलानि हंसरुतं मरालविरुतं भजद्भिः नूपुरैर्मञ्जिरैर्न भूषयन्ति। उपजातिवृत्तमेतत् तल्लक्षणन्तु "यदिन्द्रवज्रायरितो ज-गौग उपेन्द्रवज्रा प्रथमौ लघौरा अनन्तरोदितलक्ष्मभाजौ पादौ यदीयावुपजाति यस्मा" इति॥ ४॥

गात्राणीति। नार्य्यः स्त्रियः सुरतोत्सवाय गात्राणि शरीराणि कालीयकेन जापकेन चन्दनविशेषेण, चर्चि-तानि लिप्तानि "अथ जापकं कालीयकं च कालानुसार्य्य" मित्यमरः। मुखाम्बुजानि वदनकमलानि पत्रलेखा-पत्राङ्गुलिः कपाले कस्तूरिकापत्रावली तया सहितानि

रतिश्रमक्षामविपाण्डुवक्त्राः
सम्प्राप्तहर्षाभ्युदयास्तरुण्यः ।
हसन्ति नोच्चैर्दशनाग्रभिन्नान्
प्रपीड्यमानानधरानवेक्ष्य ॥ ६ ॥
पीनस्तनोरःस्थलभागशोभा-
मासाद्य तत्पीड़नजातखेदः ।
तृणाग्रलग्नैस्तुहिनैः पतद्भि-
राक्रन्दतीवोषसि शीतकालः ॥ ७ ॥

---

युक्तानि पत्रलेखा पत्राङ्गुलिरिमे समे इत्यमरः । शि-रांसि कालागुरुणा धूपितानि सञ्जातधूपितानि कुर्व्वन्ती-त्यर्थः ॥ ५ ॥

रतीति । रतिश्रमेण सुरतश्रमेण क्षामं कृशं विपाण्डु विपाण्डुवर्णं वक्त्रं यासां ता स्तथोक्ताः, सम्प्राप्तहर्षस्या-नन्दस्य अभ्युदयो याभि स्ता स्तथोक्ता स्तरुण्यो दशनानां रदनानाम् अग्रैः अग्रभागैर्भिन्नाः क्षताः तां स्तथोक्तान् अत एव प्रपीड्यमानानधरानोष्ठानवेक्ष्य दृष्ट्वा उच्चैस्स्वरेण नो हसन्ति हास्यं न कुर्व्वन्तीत्यर्थः । उच्चैर्हासे तु तेऽधिकं पीड्यन्त इति भावः ॥ ६ ॥

पीनेति । पीनौ पुष्टौ स्तनौ यत्र तादृशो य उरः स्थलभाग स्तस्य शोभामासाद्य प्राप्य तत्पीड़नेन जातः सञ्जातः खेदो दुःखं यस्य स तथोक्तः शीतकालः पतद्भि-

प्रभूतशालिप्रसवैश्चितानि
मृगाङ्गनायूथविभूषितानि ।
मनोहरक्रौञ्चनिनादितानि
सीमान्तराण्युत्सुकयन्ति चेतः ॥ ८ ॥
प्रफुल्लनीलोत्पलशोभितानि
सोन्मादकादम्बविभूषितानि ।
प्रसन्नतोयानि सुशीतलानि
सरांसि चेतांसि हरन्ति पुंसाम् ॥ ९ ॥

---

प्रपतद्भिः अत एव तृणाग्रे तृणप्रान्ते लग्नानि तैस्तथोक्तैः तुहिनैः तुषारैः उषसि प्रभाते आक्रन्दतीवोत्प्रेक्षा ॥ ७ ॥

प्रभूतेति । प्रभुताः सम्भूता ये शालिप्रसवा धान्यानि तैश्चितानि व्याप्तानि, मृगाङ्गनानां हरिणरमणीनां यूथैः समुदायै र्विभूषितानि शोभितानि, मनोहराः सुन्दरा ये क्रौञ्चाः पक्षिविशेषा स्तैर्निनादितानि प्रतिनादितानि, सीमान्तराणि सीम्नां प्रान्तभागाश्चेतो जनस्येति शेषः उत्सुकयन्ति उत्कण्ठयन्तीत्यर्थः ॥ ८ ॥

प्रफुल्लेति । प्रफुल्लैः उत्फुल्लै रिन्दीवरैः शोभितानि भूषितानि सोन्मादैः उन्मादसहितैः कादम्बैः कलहंसै र्भूषितानि, प्रसन्नं निर्म्मलं तोयं जलं येषु तानि तथोक्तानि, सुशीतलानि सरांसि सरोवराणि पुंसां पुरुषाणां चेतांस्यन्तःकरणानि हरन्तीत्यर्थः ॥ ९ ॥

पाकं व्रजन्ती हिमजातशीतै-
राधूयमाना सततं मरुद्भिः ।
प्रिये प्रियङ्गुः प्रियविप्रयुक्ता
विपाण्डुतां याति विलासिनीव ॥ १० ॥
पुष्पासवामोदि सुगन्धिवक्त्रो
निश्वासवातैः सुरभीकृताङ्गः ।
परस्पराङ्गव्यतिरिक्तशायी
शेते जनः कामरसानुविद्धः ॥ ११ ॥

---

पाकमिति । हे प्रिये ! तुषारेण हिमेन जातैः सञ्जातैः शीतैः पाकं परिपाकं व्रजन्ती गच्छन्ती मरुद्भि र्वायुभिः सततं निरन्तरम् आधूयमाना कम्पायमाना प्रियङ्गु र्गोवर्द्धनी लता "श्यामा तु महिलाह्वया । लता गोवर्द्धनी गुन्द्रा प्रियङ्गुः फलिनी फली" त्यमरः । प्रियेण कान्तेन विलासिनीव स्त्रीव विपाण्डुतां पाण्डुतां याति गच्छतीत्यर्थः ॥ १० ॥

पुष्पेति । पुष्पासवस्य पुष्पनिर्गतासवस्य पुष्पयुक्तासवस्य आमोदेन सौगन्ध्येन सुगन्धि सुरभिवक्त्रं वदनं यस्य स तथोक्तः, निःश्वासवातैः श्वासोच्छ्वासपवनैः सुरभीकृतम् अङ्गं शरीरं यस्य स तथोक्तः, कामरसेन कन्दर्परसेन अनुविद्धो व्याप्तः अत एव परस्परस्य अन्योन्यस्याङ्गेन व्यतिरिक्तं संलग्नमिति यथा शेते स तथोक्तो जनो लोकः शेते निद्रातीत्यर्थः ॥ ११ ॥

दन्तच्छदैः सव्रणदन्तचिह्नैः
स्तनैश्च पाण्यग्रकृताभिलेखैः।
संसूच्यते निर्दयमङ्गनानां
रतोपयोगो नवयौवनानाम् ॥ १२ ॥

काचिद्विभूषयति दर्पणशक्तहस्ता
बालातपेषु वनितावदनारविन्दम्।
दन्तच्छदं प्रियतमेन निपीतसारं
दन्ताग्रभिन्नमवकृष्य निरीक्ष्यते च ॥ १३ ॥

---

दन्तच्छदैरिति। नवं नूतनं यौवनं तारुण्यं यासां ता स्तथोक्ता अङ्गनानां वनितानां सव्रणानि सक्षतानि दन्तानां रदनां चिह्नानि लक्ष्माणि येषु तै स्तथोक्तैः "चिह्नं लक्ष्म च लक्षणं" मित्यमरः। दन्तच्छदैरधरैः पाण्यग्रै र्नखैः कृतस् अभिलेखो लेखनं येषु तै स्तथोक्तैः, स्तनैः कुचैश्च निर्दयं दयारहितं यथा भवति तथा रतोपयोगः सम्भोगाऽवाप्तिः संसूच्यते सम्यक् ज्ञाप्यत इत्यर्थः ॥ १२ ॥

काचिदिति। दर्पणे आदर्शे शक्तः संसक्तः हस्तः करो यस्याः सा तथोक्ता "दर्पणे मुकुरादर्शौ" वित्यमरः। काचिद्वनिता स्त्री बालातपेषु कोमलोष्णेषु स्थित्वेति यावत् वदनारविन्दं मुखकमलं विभूषयति अलङ्करोतीत्यर्थः, किञ्च प्रियतमेन कान्तेन निपीतः सारो यस्य तं तथोक्तम् दन्ताग्रैरदनाग्रैर्भिन्नः खण्डितः तथोक्त-

अन्या प्रकामसुरतश्रमखिन्नदेहा
रात्रिप्रजागरविपाटलनेत्रपद्मा ।
स्रस्तांसदेशलुलिताकुलकेशपाशा
निद्रां प्रयाति मृदुसूर्य्यकराभितप्ता ॥ १४ ॥
निर्म्माल्यदाम परिभुक्तमनोज्ञगन्ध-
मूर्द्ध्नोऽपनीय घननीलशिरोरुहान्ताः ।
पीनोन्नतस्तनभरानतगात्रयष्ट्यः
कुर्व्वन्ति केशरचनामपरास्तरुण्यः ॥ १५ ॥

---

दन्तच्छदम् ओष्ठम् अवकृष्य निरीक्ष्यते अवलोकयतीत्यर्थः ।
वसन्ततिलका वृत्तमेतत् लक्षणन्तु पूर्व्वमुक्तम् ॥ १३ ॥

अन्येति । प्रकामम् अत्यन्तं सुरतश्रमेण सम्भोगक्लेशेन खिन्नो देहः शरीरं यस्याः सा तथोक्ता, रात्रौ निशायां यः प्रजागरः जागरणं तेन विपाटले पाटलवर्णे नेत्र-पद्मे नयनारविन्दे यस्याः सा तथोक्ता, स्रस्तो विकलित अंसदेशो स्कन्धप्रदेशो लुलितोऽत्यन्त आकुलो व्याकुलः केशपाशो कवरी यस्याः सा तथोक्ता, मृदुभिः कोमलैः सूर्य्यकरैः तरणिकिरणै रभितप्ताऽन्या काचित् स्त्री निद्रां प्रयाति प्राप्नोति ॥ १४ ॥

निर्माल्येति । घनवत् मेघवत् घनाः सङ्कीर्णाः नीलाः कृष्णवर्णाः शिरोरुहान्ताः केशप्रान्ताः यासां ता स्तथोक्ताः, पीनाः पुष्टाः उन्नताश्च ये कुचाः स्तनाः तेषां भरेण भारेण नता नम्रा गात्रयष्ट्यः शरीरलता

अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं
हर्षान्विता विरचिताधरचारुशोभा ।
कूर्पासकं परिदधाति नखक्षताङ्गी
व्यालम्बिनीलललितालककुञ्चिताक्षी ॥ १६ ॥
अन्याश्चिरं सुरतकेलिपरिश्रमेण
खेदं गताः प्रशिथिलीकृतगात्रयष्ट्यः ।

---

यासां ता तथोक्ताः, अपरा अन्या स्त्रियः परिमुक्तस्त्रक्तो मनोज्ञः सुन्दरो गन्धो येन स तथोक्तं, निर्माल्यदाम निर्माल्यभूतां स्रजं मूर्ध्नः शिरसः अपनीय दूरीकृत्य केशानां कुन्तलानां रचना कुर्वन्ति ॥ १५ ॥

अन्येति । प्रियेण कान्तेन परिभुक्तं सम्भुक्तं गात्रं शरीरम् अवेक्ष्य दृष्ट्वा हर्षेणानन्देनान्विता युक्ता विरचिता कृता अधरे ओष्ठे चारुशोभानां लकरेखया दन्तक्षतैर्वा यस्याः सा तथोक्ता, नखैर्नखरैः क्षतं कारितमङ्गं शरीरं यस्याः सा तथोक्ता, व्यालम्बिनीभिर्लम्बिनीलवर्णैः ललितैः सुन्दरैः अलकैः कुन्तलैः कुञ्चिते आकुञ्चिते अक्षिणी यस्याः सा तथोक्ताऽन्या स्त्री कूर्पासं "चोलम् चोलः कूर्पासको स्त्रिया" मित्यमरः । परिदधाति धत्ते इत्यर्थः ॥ १६ ॥

अन्या इति । चिरं चिरकालं या सुरतकेलिः सम्भोगक्रिया तया यः परिश्रमः क्लेशः तेन खेदं गता प्राप्ता अत एव प्रकर्षेण शिथिलीकृता गात्रयष्ट्यो यासां ता

संहृष्यमाणपुलकोरुपयोधरान्ताः
प्रत्यञ्जनं विदधति प्रमदाः सुशोभाः ॥ १७ ॥
बहुगुणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसीमा ।
सततमतिमनोज्ञः क्रौञ्चमालापरीतः
प्रदिशतु हिमयुक्तः काल एष सुखं वः ॥ १८ ॥

इति श्रीकालिदासकृतावृतुसंहारे हेमन्तवर्णनं नाम चतुर्थः सर्गः ॥ ४ ॥

---

स्तथोक्ताः । संहृष्यमाणपुलको रोमाञ्चो यस्मिन् तादृशः ऊरुः पीनस्य पयोधरप्रान्तो यासां ता स्तथोक्ताः, सुष्ठुः समीचीना शोभा यासां ता स्तथोक्ताः अन्याः प्रमदा स्त्रियः प्रत्यञ्जनम् अभ्यङ्गं सुगन्धतैलादिना विदधति कुर्वन्तीत्यर्थः ॥ १७ ॥

बहुगुणेति । बहुगुणैरमणीयः सुन्दरो योषितां स्त्रीणां चित्तहारी मनोहारी परिणतैः परिपक्वैर्बहुभि शालिभिर्व्याकुलो ग्रामसीमा ग्रामान्ताः प्रान्ता यस्मि स तथोक्तः, सततं निरन्तरम् अतिमनोज्ञः इतिसुन्दरः क्रौञ्चमालाभिः पंक्तिभिः परीतो युक्तः हिमयुक्तः एष कालः हेमन्तकालः वः सुखं प्रदिशतु ददात्वित्यर्थः ॥ १८ ॥

इति श्रीभारद्वाजमणिरामविरचितायामृतुसंहारव्याख्यायां चतुर्थः सर्गः ॥ ४ ॥



# शिशिरवर्णनन्नाम

पञ्चमः सर्गः ।

प्ररूढ़शालीक्षुचयैर्मनोहरं
क्वचित् स्थितक्रौञ्चनिनादराजितम् ।
प्रकामकामप्रमदाजनप्रियं
वरोरु कालं शिशिराह्वयं शृणु ॥ १ ॥

---

अथ क्रमप्राप्तं शिशिरं वर्णयति । प्ररूढेति । वरौ उत्कृष्टौ ऊरू जङ्घौ यस्याः तस्याः सम्बोधने हे वरोरु ! प्ररूढ़ानां शालीनां शराणां च चार्थं समूहैः, शरस्तृण-विशेषः क्वचित् पुस्तके प्ररूढ़शालीक्षुचयावृतक्षितिमिति पाठः, स तु रूढ़ एव, तत्र प्ररूढ़शालीक्षुचयैरावृता-ऽऽच्छादिता क्षितिः पृथ्वी यस्मिन्निति समासः, क्वचित् कुत्रचिद्वृक्षशाखायां स्थितानामुपविष्टानां क्रौञ्चानां पक्षि-विशेषाणां निनादैर्व्विकृतैर्व्विराजितं शोभितं तत्तथोक्तं, प्रकामयत्यन्तं कामो यस्मिन् तं तथोक्तं, प्रमदाजनस्य स्त्रीजनस्य प्रियमिष्टं शिशिरे ते आह्वा आख्या यस्य तं तथोक्तं कालं शृणु आकर्णयेत्यर्थः । वंशस्थवृत्तमेतत् तल्लक्ष-णन्तु पूर्व्वमुक्तम् ॥ १ ॥

६ ऋतु

निरुद्धवातायनमन्दिरोदरं
हुताशनो भानुमतो गभस्तयः ।
गुरूणि वासांस्यबलाः सयौवनाः
प्रयान्ति कालेऽत्र जनस्य सेव्यताम् ॥ २ ॥
न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम् ।
न वायवः सान्द्रतुषारशीतला:
जनस्य चित्तं रमयन्ति साम्प्रतम् ॥ ३ ॥

---

निरुद्धेति । अत्र काले शिशिरकाले निरुद्धानि वातायनानि गवाक्षा यस्य तादृशस्य मन्दिरस्योदरं गर्भदेशः "वातायनं गवाक्षः स्या" दित्यमरः, हुताशनोऽग्निर्भानुमतः सूर्य्यस्य गभस्तयः किरणाः गुरूणि वासांसि च वस्त्राणि सयौवनास्तारुण्यसहिता अबलाः स्त्रियो जनस्य लोकस्य सेव्यतां प्रयान्ति प्राप्नुवन्तीति वचनविपरिणामेनान्वयः ॥ २ ॥

नेति । साम्प्रतमिदानीं चन्द्रमरीचय इव चन्द्ररश्मय इव शीतलं शिशिरं कस्य चित्तं न रमयति अपि तु सर्व्वेषां चित्तं रमयतीति वचनविपरिणामेनान्वयः, एवमग्रेऽपि, तथा शरदिन्दुवत् निर्म्मलं स्वच्छं हर्म्यपृष्ठं प्रासादतलं जनस्य चित्तं न रमयति, तथा सान्द्रेण घनेन तुषारेण हिमेन शीतला:

तुषारसङ्घातनिपीतशीतला
शशाङ्कभाभिः शिशिरीकृताः पुनः ।
विपाण्डुताराग्रणजिह्मभूषिता
जनस्य सेव्या न भवन्ति रात्रयः ॥ ४ ॥
गृहीत ताम्बूलविलेपनस्रजः
सुखासवामोदितवक्त्रपङ्कजाः ।
प्रकामकालागुरुधूपवासितं
विशन्ति शय्यागृहमुत्सुकस्त्रियः ॥ ५ ॥

---

शिशिराः वायवः पवना अपि जनस्य चित्तं न रमयतीत्यर्थः ॥ ३ ॥

तुषारेति । तुषारसङ्घातस्य हिमसमूहस्य निपातेन शीतला शशाङ्कस्य चन्द्रस्य भाः कान्तयस्ताभिः शिशिरीकृताः एतेन शैत्याधिक्यं सूचितं विपाण्डुना पाण्डुरवर्णेन तारागणेन नक्षत्रसमूहेन जिह्मं वक्रं यथा भवति तथा भूषिताः शोभिताः रात्रयः शर्वर्यो जनस्य लोकस्य सेव्या सेवितुम् उपभोक्तुं, योग्या भवन्तीत्यर्थः ॥ ४ ॥

गृहीतेति । गृहीता ताम्बूलं च विलेपनं च कस्तूर्यादिस्रजः कुसुममालाश्च याभिः ता स्तथोक्ताः, सुखयतीति सुखं सुखकरो य आसवो मधु तेन आमोदितं सुगन्धितं वक्त्रपङ्कजं मुखकमलं यासां ता स्तथोक्ताः, उत्सुकाः

कृतापराधान् बहुशोऽपि तर्जितान्
सवेपथून् साध्वससुप्तचेतसः।
निरीक्ष्य भर्तॄन् सुरताभिलाषिणः
स्त्रियोऽपराधान् समदा विसस्मरुः॥ ६॥
प्रकामकामैर्युवभिः सुनिर्दयं
निशासु दीर्घास्वभिरामिता भृशम्।
भ्रमन्ति मन्दं श्रमखेदितोरवः
क्षपावसाने नवयौवनाः स्त्रियः॥ ७॥

---

उत्कण्ठिकाः स्त्रियः कालागुरोः कृष्णागुरोर्धूपेन वासितं गृहं मन्दिरं विशन्ति प्रविशन्तीत्यर्थः॥ ५॥

कृतापराधानिति। समदाः मदसहिताः स्त्रियः कृतोऽपराधो यैस्तथोक्तान् अत एव बहुशो बहुवारमपि तर्जितान् वेपथुभिः कम्पैः सहिता युक्ता स्तां तथोक्तान् "साध्वसं भय" मित्यमरः। भर्तॄन् प्रियान् सुरताभिलाषिणः सम्भोगाभिलाषिणो वीक्ष्य अपराद्धान् अपराधकृतान् विसस्मरुरित्यर्थः, वंशस्थवृत्तमेतल्लक्षणन्तूक्तम्॥ ६॥

प्रकामकामैरिति। प्रकाममत्यन्तं कामो येषां ते तथोक्तैः कामातुरैरित्यर्थः, युवभि स्तरुणैः दीर्घासु निशासु रात्रिषु चिरं चिरकालं निर्दयं निर्दयया दयाभावेन सहितं यथा भवति तथा अभिरामिताः क्रीड़िताः अत एव श्रमेण परिश्रमेण खेदितं खिन्न मुरो हृदयं यासां

मनोज्ञकूर्पासकपीड़ितस्तनाः
सरागकौशेयकभूषितोरसः।
निवेशितान्तः कुसुमैः शिरोरुहैः
विभूषयन्तीव हिमागमे स्त्रियः॥ ८॥
पयोधरैः कुङ्कुमरागपिञ्जरैः
सुखोपसेव्यैर्नवयौवनोष्मभिः।
विलासिनीभिः परिपीड़ितोरसः
स्वपन्ति शीतं परिभूय कामिनः॥ ९॥

---

ता स्तथोक्ताः, सयौवना स्तरुण्यः स्त्रियः क्षपायाः रात्र्याः अवसानं समाप्तिस्तस्मिन् प्रभाते इत्यर्थः, मन्दं मन्थरं भ्रमन्ति भ्रमणं कुर्वन्तीत्यर्थः॥ ७॥

मनोज्ञेति। मनोज्ञेन सुन्दरेण कूर्पासकेन चोलेन पीड़िताः स्तना यासां ता स्तथोक्ताः, सरागं रागसहितं यत्कौशेयमेव कौशेयकङ्कृमिकोषोत्थं वस्त्रं तेन भूषितं शोभितम् उरो हृदयं यासां ता स्तथोक्ताः स्त्रियः निवेशितानि निविष्टानि अन्तरम् अन्तरभागे कुसुमानि येषां ते तै स्तथोक्तैः शिरोरुहैः केशैर्हिमागमं शीतकालं विभूषयन्तीवेत्युत्प्रेक्षा॥ ८॥

पयोधरैरिति। विलासिनीभिः कुङ्कुमस्य केशरस्य रागेण पिञ्जरैः पीतवर्णैः सुखेनोपसेव्याः उपभोग्या स्तै स्तथोक्तैः नवो नूतनो यौवनस्य तारुण्यस्योष्मा औष्ण्यं येषु

सुगन्धिनिश्वासविकम्पितोत्पलं
मनोहरं कामरतिप्रबोधकम् ।
निशासु हृष्टाः सह कामिभिः स्त्रियः
पिबन्ति मद्यं मदनीयमुत्तमम् ॥ १० ॥
अपगतमदरागा योषिदेका प्रभाते
कृतनिविडकुचाग्रा पत्युरालिङ्गनेन ।
प्रियतमपरिभुक्तं वीक्षमाणा स्वदेहं
व्रजति शयनवासाद्वासमन्यद्धसन्ती ॥ ११ ॥

---

ते तथोक्तैः पयोधरैः कुचैः परिपीडितमुरो हृदयं येषां ते तथोक्ताः कामिनो विलासिनः शीतं हिमं परिभूयाभिभूय स्वपन्ति निद्रां कुर्वन्तीत्यर्थः ॥ ९ ॥

सुगन्धीति । हृष्टा हर्षिताः स्त्रियः सुगन्धिः सुरभिनिश्वासेन विकम्पितम् उत्कम्पितम् उत्पलं कुवलयं यस्मिन् तं तथोक्तं मनोहरं सुन्दरं काममत्यन्त रतेः सुरतस्य प्रबोधजनकं मदनीयम् उन्मादकारम् उत्तमम् उत्तमजातीयं मद्यं मधु निशासु कामिभिः प्रियैः सह पिबन्तीत्यर्थः ॥ १० ॥

अपगतेति । अपगतो मदरागो यस्याः सा तथोक्ता पत्युः प्रियस्य आलिङ्गनेन परिरम्भणेन कृतं निविडं सान्द्रं कुचाग्रं स्तनाग्रं यस्याः सा तथोक्ता प्रियतमेन कान्तेन परिभुक्तं स्वं देहं निजं शरीरं वीक्षमाणा पश्यन्ती हसन्ती

अगुरुसुरभिधूपाऽऽमोदितं केशपाशं
गलितकुसुममालं तन्वती कुञ्चिताग्रम् ।
त्यजति गुरुनितम्बा निम्नमध्यावसाना
उषसि शयनमन्या कामिनी चारुशोभा ॥ १२ ॥
कनककमलकान्तैः सद्य एवाम्बुधौतैः
श्रवणतटनिषक्तैः पाटलोपान्तनेत्रैः ।

---

स्मेरानना एका योषित् स्त्री शयनवासात् अन्यवासं मन्दिरं व्रजन्तीत्यर्थः ॥ ११ ॥

अगुर्विति । अगुरो सुरभिना सुगन्धिना धूपेनामोदितः सञ्जात सौरभस्तं तथोक्तं गलिता कुसुममाला यस्मात् तं तथोक्तं निम्नरूपं मध्यावसानं मध्यप्रान्तो यस्याः सा तथोक्ता चारुशोभा अन्या कामिनी स्त्री उषसि प्रातःकाले शयनं पर्य्यङ्कं "शयनं मञ्च पर्य्यङ्क पल्यङ्का" इत्यमरः, त्यजति मुञ्चतीत्यर्थः, क्वचित् पुस्तके निम्नमध्यावसन्नेति पाठ स्तदर्थं सुनिम्नेन मध्येनावसन्ना खिन्नेति निम्नमध्यावसानम् उषसीत्यत्र विवक्षा प्राप्तोऽप्यन्नसंहिता तदुक्तं "संहितैकपदे नित्या नित्या धातूपसर्गयोः नित्या समासे वाक्ये तु सा विवक्षामपेक्ष्य" इति ॥ १२ ॥

कनकेति । सद्य एव तत्कालमेवाम्बुधौतैः अम्बुना जलेन धौतानि प्रक्षालितानि तैस्तएव कनककमलकान्तैः कमलस्य सुवर्णस्य कमलाम्बुजमिव कान्तैः सुन्दरैर्वदनबिम्बे-

उषसि वदनबिम्बैरंससंसक्तकेशैः
श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ॥ १३ ॥
पृथुजघनभरार्त्ताः किञ्चिदानम्रमध्या
स्तनभरपरिखेदान्मन्दमन्दं व्रजन्त्यः ।
सुरतसमयवेषं नैशमाशु प्रहाय
दधति दिवसयोग्यं वेषमन्यास्तरुण्यः ॥ १४ ॥
नखपदचितभागान् वीक्ष्यमाणाः स्तनाग्रा-
नधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः ।

---

चारवः सुन्दराश्च ते ताम्रा आरक्ताश्च ते अधरोष्ठाश्च तैः श्रवणपटे कर्णप्रान्ते निषक्तैः निषक्तैः पाटलः पाटलवर्णः उपान्तः प्रान्तो येषां तादृशानि च तानि नेत्राणि लोचनानि तैः "लोचनं नयनं नेत्र" मित्यमरः, अंसे स्कन्धे संसक्ताः संलग्ना ये केशाः कुन्तलास्तैश्चोपलक्षिताः स्त्रियः अद्य गृहमध्ये श्रिय इव लक्ष्म्य इव संस्थिता इत्यर्थः ॥१३॥

पृथ्वीति। पृथुलस्य स्थूलस्य जघनस्य कट्यग्रभागस्य भरेण आर्त्ताः पीड़िताः "क्लीबे तु जघनं पुर" इत्यमरः, किञ्चित् ईषत् आनतं नम्रं मध्यं यासां ता तथोक्ताः, स्तनानां कुचानां भरेण भारेण यः परिखेदः श्रम यस्मात् मन्दमन्दं मन्थरं व्रजन्त्यो गच्छन्त्योऽन्यास्तरुण्यः निशिभवं नैशं सुरतसमये सम्भोगकाले यो वेष आकारान्तरमाशु झटिति प्रहाय त्यक्त्वा दिवसयोग्यं वेषं दधतीत्यर्थः ॥ १४ ॥

अभिमतरसमेतं नन्दयन्त्यस्तरुण्यः
सवितुरुदयकाले भूषयन्त्याननानि ॥ १५ ॥

प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः
प्रसृतसुरतकेलिर्जातकन्दर्पदर्पः ।
प्रियजनरहितानां चित्तसन्तापहेतुः
शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम् ॥ १६ ॥

इति ऋतुसंहारे पञ्चमः सर्गः ॥ ५ ॥

---

नखपदेति । नखपदैर्नखक्षतैः चिता व्याप्ता भागा येषां तान् यथोक्तान् स्तनाग्रान् कुचाग्रान् वीक्षमाणाः आलोकयन्त्यो दन्तभिन्नं रदनखण्डितम् अधरः किसलयमिव पल्लवमिवेति तस्याग्रं स्पृशन्त्यः स्पर्शं कुर्वन्त्यः एतम् अभितः समन्ततो यो रसस्तन्नन्दयन्त्योऽभिनन्दयन्त्यस्तरुण्यः सवितुः सूर्यस्योदयकाले आननानि मुखानि भूषयन्ति अलं कुर्वन्तीत्यर्थः ॥ १५ ॥

प्रचुरेति । प्रचुरो बहुलो गुडविकारो यस्मिन् तथोक्तः जातः सञ्जातः कन्दर्पदर्पो मन्मथाधिक्यं यस्मिन् स तथोक्तः प्रियजनेन कान्तजनेन रहितानां विरहिणीनामित्यर्थः, चित्तसन्तापस्य हेतुः कारणमेषः शिशिरसमयो वः श्रेयसे कल्याणाय नित्यं सदा अस्तु इत्यर्थः ॥ १६ ॥

इति भारद्वाजमणिरामविरचितायामृतुसंहार-
चन्द्रिकायां पञ्चमः सर्गः ॥ ५ ॥

## वसन्तवर्णनन्नाम

### षष्ठः सर्गः ।

प्रफुल्लचूताङ्कुरतीक्ष्णसायको
द्विरेफमाला विलसद्धनुर्गुणः ।
मनांसि वेद्धुं सुरतप्रसङ्गिनां
वसन्तयोद्धा[1] समुपागतः प्रिये ॥ १ ॥
द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।

अथ क्रमप्राप्तं वसन्तकालं वर्णयति । प्रफुल्लेति । हे प्रिये ! प्रफुल्लस्य चूतस्याम्रवृक्षस्य अङ्कुरा एव तीक्ष्णाः निशिताः सायका बाणा यस्य स तथोक्तः, द्विरेफाणां भ्रमराणां माला पङ्क्तिरेव विलसन् धनुर्गुणः यस्य स तथोक्तः, वसन्तयोद्धा सुरतप्रसङ्गिनां मनांसि वेद्धुं विदारयितुं समुपागतः आगत इत्यर्थः ॥ १ ॥

द्रुमा इति । हे प्रिये ! वसन्ते वसन्तकाले सर्वं चारुतरमतिरमणीयम् अस्ति वर्तते सर्वं किं तदाह द्रुमा इति, द्रुमा वृक्षाः सपुष्पाः कुसुमसहिताः, सलिलं जलं

(१) वसन्तयोध इति पाठान्तरम् ॥

सुखाः प्रदोषा दिवसाश्च रम्याः
सर्व्वं प्रिये चारुतरं वसन्ते ॥ २ ॥
वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम् ।
चूतद्रुमाणां कुसुमान्वितानां
ददाति सौख्यमयं वसन्तः ॥ ३ ॥
कुसुम्भरागारुणितैर्दुकूलै-
र्नितम्बबिम्बानि विलासिनीनाम् ।

---

सपद्मं कमलसहितं, स्त्रियो वनिताः सकामाः सम-न्मथाः, पवनो वायुः सुगन्धिः कुसुमसंसर्गात् सुरभिः; प्रदोषाः सन्ध्यासमयाः सुखाः सुखकराः, दिवसाश्च रम-णीया इति ॥ २ ॥

वापीति । अयं वसन्तो वसन्तकालो वापीजलानां दीर्घिकाजलानां तत्र जलक्रीडावशात् मणिमेखलानां मणिखचितमेखलानां स्त्रीभिः कटिप्रदेशे धारणात् शशाङ्क-भासां चन्द्रकान्तीनां रात्रौ संसेव्यत्वात् प्रमदाजनानां वनिताजनानां सुसम्भोगात् कुसुमैः पुष्पैरन्विता युक्तास्तेषां तथोक्तानां चूतद्रुमाणाम् आम्रवृक्षाणां स्त्रीकर्णावतंस-विषयपल्लवत्वात् सौभाग्यं सुभगतां ददातीत्यर्थः ॥३॥

कुसुम्भेति । कुसुम्भस्य रागेणारुणितानि रक्तानि तै स्तथोक्तैर्दुकूलैर्वस्त्रैर्विलासिनीनां विलासवतीनां नितम्ब-

रक्तांशुकैः कुङ्कुमरागगौरै-
रलंक्रियन्ते स्तनमण्डलानि ॥ ४ ॥
कर्णेषु योग्यं नवकर्णिकारं
चलेषु नीलेष्वलकेष्वशोकः ।
पुष्पं च फुल्लं नवमल्लिकायाः
प्रयाति कान्तिं प्रमदाजनस्य ॥ ५ ॥
स्तनेषु हाराः सितचन्दनार्द्राः
भुजेषु सङ्गं वलयाऽङ्गदानि ।

---

बिम्बानि कुङ्कुमस्य केशरस्य रागेण गौराः पिञ्जरास्तै स्तथोक्तैरक्तांशुकै रक्तवस्त्रैः स्तनमण्डलानि अलं क्रियन्त इत्यर्थः ॥ ४ ॥

कर्णेष्विति । प्रमदाजनानां वनिताजनानां कर्णेषु श्रवणेषु योग्यम् अवतंसयोग्यं नवं नूतनं कर्णिकारं कर्णिकारकुसुमम् "अथ द्रुमोत्पलः कर्णिकारः परिव्याधरे" इत्यमरः । चलेषु चञ्चलेषु नीलेषु कृष्णवर्णेषु अलकेषु अशोकं वञ्जुलकुसुमं "वञ्जुलोऽशोक" मित्यमरः, फुल्लं संफुल्लं नवमल्लिकायाः पुष्पं च जात्यभिप्रायेणैकवचनं, कान्तिं शोभां प्रयाति प्राप्नोतीत्यर्थः ॥ ५ ॥

स्तनेष्विति । अङ्गनेन मन्मथेनातुरं पीडितं मानसं यासां तासां तथोक्तानां नितम्बिनीनां नितम्बवतीनां स्तनेषु कुचेषु सितचन्दनेन धवलचन्दनद्रवेणार्द्रा हाराः

प्रयान्त्यनङ्गातुरमानसानां
नितम्बिनीनां जघनेषु काञ्च्यः ॥ ६ ॥
सपत्रलेखेषु विलासिनीनां
वक्त्रेषु हेमाम्बुरुहोपमेषु ।
रत्नान्तरे मौक्तिकसङ्गरम्यः
स्वेदोद्गमो विस्तरतामुपैति ॥ ७ ॥
उच्छ्वासयन्त्यः श्लथबन्धनानि
गात्राणि कन्दर्पसमाकुलानि ।
समीपवर्त्तिष्वधुना प्रियेषु
समुत्सुका एव भवन्ति नार्यः ॥ ८ ॥

---

मुक्ताहाराः भुजेषु बाहुषु वलयांगदानि कटककेयूराणि जघनेषु काञ्च्यः सङ्गं सम्बन्धं प्रयान्ती प्राप्नुवन्तीत्यर्थः ॥ ६ ॥

सपत्रेति । रत्नान्तरे रत्नानां मध्ये मौक्तिकानां मुक्ताफलानां सङ्ग एव रम्यो रमणीयः, स्वेदोद्गमो धर्मनिर्गमो विलासिनीनां सपत्रलेखेषु पत्रलेखा कपोलादौ कस्तूर्य्यादि रचितावली तया सहितेषु हेमाम्बुरुहेण काञ्चनपद्मेनोपमेषु वक्त्रेषु मुखेषु विस्तारतामुपैति प्राप्नोतीत्यर्थः ॥ ७ ॥

उच्छ्वासयन्त्य इति । श्लथानि शिथिलानि कञ्चुक्यादीनि येषु तानि तथोक्तानि कन्दर्पेणानङ्गेन समाकुलानि व्याकुलानि "कन्दर्पो दर्पकोनङ्ग" इत्यमरः, गात्राणि

तनूनि पाण्डूनि समन्थराणि
मुहुर्मुहुर्जृम्भणतत्पराणि ।
अङ्गान्यनङ्गः प्रमदाजनस्य
करोति लावण्यससम्भ्रमाणि ॥ ९ ॥

नेत्रेषु लोलं मदिरालसेषु
गण्डेषु पाण्डुः कठिनस्तनेषु ।
मध्येषु निम्नो जघनेषु पीनः
स्त्रीणामनङ्गो बहुधा स्थितोऽद्य ॥ १० ॥

---

शरीराणि उच्छ्वासयन्त्यो नार्यः स्त्रियः अधुना वसन्तकाले समीपवर्त्तिषु निकटस्थितेषु कान्तेषु उत्सुकाः उत्कण्ठिता एव भवन्ति जायन्त इत्यर्थः ॥ ८ ॥

तनूनिति । अनङ्गः काम प्रमदाजनस्य स्त्रीजनस्य अङ्गानि गात्राणि तनूनि कृशानि पाण्डूनि पाण्डुवर्णानि समन्थराणि मुहुर्मुहुर्वारं वारं जृम्भते तत्पराणि प्रसितानि तत्परे प्रसितासक्तावित्यमरः, लावण्येन सौन्दर्य्येण ससंभ्रमाणि संवेगसहितानि समौ संवेगसम्भ्रमावित्यमरः, करोतीत्यर्थः ॥ ९ ॥

नेत्रेष्विति । स्त्रीणां मदिरयाऽलसानि आलस्ययुक्तानि तेषु तथोक्तेषु नेत्रेषु लोचनेषु लोचनं नयनमित्यमरः लोलश्चञ्चलः गण्डेषु कपोलेषु पाण्डुः पाण्डुवर्णः स्तनेषु कुचेषु कठिनो मध्येषु मध्यभागेषु निम्नो गभीरो

अङ्गानि निद्रालसविभ्रमाणि
वाक्यानि किञ्चिन्मदलालसानि।
भ्रूक्षेपजिह्मानि च वीक्षितानि
चकार कामः प्रमदाजनानाम्॥ ११॥

प्रियङ्गुकालीयककुङ्कुमाक्तं
स्तनेषु गौरेषु विलासिनीभिः।
आलिप्यते चन्दनमङ्गनाभिः
मदालसाभिर्मृगनाभियुक्तम्॥ १२॥

गुरूणि वासांसि विहाय तूर्णं
तनूनि लाक्षारसरञ्जितानि।

---

जघनेषु पीनः पुष्टः इत्यनेन प्रकारेण अनङ्गः कामोऽद्य बहुधा बहुप्रकारेण स्थित इत्यर्थः॥ १०॥

अङ्गानीति। कामः प्रमदाजनानाम् अङ्गानि निद्रया अलसा विभ्रमा शृङ्गारचेष्टा येषु तानि तथोक्तानि वाक्यानि किञ्चित् ईषत् मदने लालसानि चाटूनि वीक्षितानि प्रेक्षणानि भ्रूक्षेपेण जिह्मानि कुटिलानि चेत्यर्थः॥ ११॥

प्रियङ्गिति। विलासिनीभिर्विलासवतीभिर्मदनालसा तासु युक्तास्ताभिस्तथोक्ताभिरङ्गनाभिः स्त्रीभिर्गौरेषु गौरवर्णेषु स्तनेषु कुचेषु प्रियङ्गुः श्यामालता कालीयकं जापकं कुङ्कुमकेशरं च तैः सक्तं युक्तं मृगनाभियुक्तं कस्तूरीयुक्तं चन्दनम् आलिप्यते लीप्यत इत्यर्थः॥ १२॥

सुगन्धिकालागुरुधूपितानि
धत्ते जनः काममदालसाङ्गः ॥ १३ ॥
पुंस्कोकिलश्चूतरसासवेन
मत्तः प्रियां चुम्बति रागहृष्टः ।
कूजद्द्विरेफोऽप्ययमम्बुजस्थः
प्रियं प्रियायाः प्रकरोति चाटु ॥ १४ ॥
ताम्रप्रवालस्तवकावनम्राः
चूतद्रुमाः पुष्पितचारुशाखाः ।
कुर्व्वन्ति कामं पवनावधूताः
पर्युत्सुकं मानसमङ्गनानाम् ॥ १५ ॥

---

गुरूणीति । काममदेन अलसमङ्गं यस्य स तथोक्तो जनो गुरूणि वासांसि वस्त्राणि विहाय त्यक्त्वा तनूनि सूक्ष्माणि लाक्षारसेन रञ्जितानि आरक्तानि सुगन्धिना सुरभिना कालागुरुणा कृष्णागुरुणा धूपितानि सञ्जात-धूपानि वासांसि धत्ते दधातीत्यर्थः ॥ १३ ॥

पुंस्कोकिलेति । रागेण हृष्टो हर्षितः चूतस्याम्र-वृक्षस्य रसएव आसव स्तेन मत्तः पुंस्कोकिलः प्रियां चुम्बति अम्बुजे कमले तिष्ठति स तथोक्तः कूजन् गुञ्जन् अयं द्विरेफो भ्रमरोऽपि प्रियायाः भ्रमर्याः प्रियमिष्टं चाटु प्रकरोतीत्यर्थः ॥ १४ ॥

ताम्रेति । ताम्राणामारक्तानां पल्लवानां स्तवकैर्गु-च्छैरवनम्रा नताः पुष्पिताः सञ्जातपुष्पाः अत एव चारवः

आमूलतो विद्रुमरागताम्रं
सपल्लवाः पुष्पचयं दधानाः ।
कुर्व्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥ १६ ॥
मत्तद्विरेफपरिचुम्बितचारुपुष्पा
मन्दानिलाकुलितनम्रमृदुप्रवालाः ।
कुर्व्वन्ति कामिमनसां सहसोत्सुकत्वं
चूताभिरामकलिकाः समवेक्ष्यमाणाः ॥ १७ ॥

---

सुन्दराः शाखा येषां ते तथोक्ताः पवनेन वायुना अवधूताः कम्पिताश्चूतद्रुमाः आम्रवृक्षाः अंगनानां वनितानां मानसमन्तःकरणं काममत्यन्तं पर्य्युत्सुकम् उत्कण्ठितं कुर्व्वन्तीत्यर्थः ॥ १५ ॥

आमूलेति। आमूलतो मूलादारभ्य विद्रुमस्य प्रवालस्य प्रवाल रागवत्ताम्रसारकं पुष्पचयं कुसुमसमूहं दधानाः धारयन्तः सपल्लवाः पत्रसहिता अशोकवृक्षाः वञ्जुलद्रुमा निरीक्ष्यमाणा अवलोक्यमानाः सन्तः नवयौवनानां विप्रयुक्तानां तरुणीनां च हृदयं सशोकं कुर्व्वन्तीत्यर्थः ॥ १६ ॥

मत्तेति। मत्तैरुन्मत्तैर्द्विरेफैर्भ्रमरैः परिचुम्बितानि चारूणि सुन्दराणि पुष्पाणि यासां तास्तथोक्तास्चूतस्याम्रस्याऽभिरामाःसुन्दराः कलिकाः समवेक्ष्यमाणाः सत्यः कामिमनसां सहसोत्सुक्यं कुर्व्वन्तीत्यर्थः ॥ १७ ॥

कान्तामुखद्युतिजुषामपिचोद्गतानां
शोभां परां कुरवकद्रुममञ्जरीणाम् ।
दृष्ट्वा प्रिये सहृदयस्य भवेन्न कस्य
कन्दर्पबाणपतनव्यथितं हि चेतः ॥ १८ ॥
आदीप्तवह्निसदृशैर्मरुतावधूतैः
सर्व्वत्र किंशुकवनैः कुसुमावनम्रैः ।
सद्यो वसन्तसमये हि समाचितेयं
रक्तांशुका नववधूरिव भाति भूमिः ॥ १९ ॥

---

कान्तेति । हे प्रिये ! कान्तामुखस्य मरणीवदनस्य द्युति कान्तिं भजन्ति सेवन्त इति तेषां तयोक्तानामपि च किञ्च उद्गतानां निर्गतानां शोभामञ्जानरद्याखेषां मञ्जरीणां "अम्ल.नसुवहा सह । तत्र शीणे कुरवक" इत्यमरः, परामुत्कृष्टां शोभां दृष्ट्वाऽवलोक्य कस्य सहृदयस्य चेतोऽन्तःकरणं कन्दर्पस्य कामस्य बाणानां शराणां पतनेन निपातेन व्यथितं पीड़ितं न भवेत् अपि तु सर्व्वस्यापीत्यर्थ , हि पादपूरणार्थः ॥ १८ ॥

आदीप्तेति । वसन्तसमये वसन्तकाले इतस्ततः सद्यः सत्वरम् आदीप्तेन वह्निना सदृशास्तैतयोक्तैरित्यर्थः, मरुता पवनेनावधूताः कम्पितास्तैस्तयोक्तैः कुसुमैः पुष्पैरवनम्रा नतास्तैस्तयोक्तैः किंशुक वनैः पलाशदक्षसमुदायैः "पलाशे किंशुकः पर्णो वातपोत" इत्यमरः, वसन्तकाले सर्व्वत्र इतस्ततः सद्यः सत्वरं समाचितेयं भूमिः पृथिवी रक्तांशुका

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं
किं कर्णिकारकुसुमैर्न कृतं न दग्धम् ।
यत्कोकिलः पुनरयं मधुरैर्वचोभि-
र्यूनां मनः सुवदना निहितं निहन्ति ॥ २० ॥
पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः
कूजद्भिरुन्मदकलानि वचांसि भृङ्गैः ।
लज्जान्वितं सविनयं हृदयं क्षणेन
पर्याकुलं कुलगृहेऽपि कृतं वधूनाम् ॥ २१ ॥

---

आरक्तवसना नववधूरिव नूतनस्त्रीव भाति शोभत इत्यर्थः ॥ १९ ॥

किं किमिति । सुवदनायां रमणीयमुखायां निहितं स्थापितं यूनां तरुणानामन्तः शुकस्य कीरस्य मुखस्य वदनस्य छविरिव छविः कान्तिर्येषां तैस्तथोक्तैः किंशुकैः पलाशकुसुमैः किन्न भिन्नं न विदारितं कर्णिकारस्य द्रुमोत्पलस्य कुसुमैः पुष्पैश्च दग्धं न कृतं यत्पुनरयं कोकिलः मधुरैर्वचोभिः वचनैर्निहन्तीत्यर्थः ॥ २० ॥

पुंस्कोकिलैरिति । कलमव्यक्तमधुरं वचो वचनं येषां तैस्तथोक्तैः उपात्तः संप्राप्तः हर्षो येषां तैस्तथोक्तैः पुंस्कोकिलैः उन्मादेन उत्कटमदेन उन्मदकलानि अव्यक्तमधुराणि वचांसि वचनानि कूजद्भिर्भृङ्गैर्भ्रमरैर्लज्जया त्रपया अन्वितं युतं सविनयं विनयसहितं वधूनां स्त्रीणां हृदये कुलगृहे क्षणेन क्षणमात्रेन पर्याकुलं व्याकुलं कृतमित्यर्थः ॥ २१ ॥

आकम्पयन् कुसुमिताः सहकारशाखा
विस्तारयन् परभृतस्य वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन्नराणां
नीहारपातविगमात्सुभगो वसन्ते ॥ २२ ॥

कुन्दैः सविभ्रमवधूहसितावदातै-
रुद्योतितान्युपवनानि मनोहराणि ।
चित्तं मुनेरपि हरन्ति निवृत्तरागं
प्रागेव रागमलिनानि मनांसि यूनाम् ॥ २३ ॥

---

आकम्पयन्निति । वसन्ते वसन्तकाले नीहारस्य हिमस्य यः पातः पतनं तस्य विगमात् नाशात् सुभगः सुन्दरो वायुः पवनः कुसुमिताः सञ्जातकुसुमाः सहकारस्यातिसौरभा आम्रवृक्षस्य शाखा "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ" इत्यमरः, आकम्पयन् सन् दिक्षु परभृतस्य कोकिलस्य "वनप्रियः परभृतः कोकिलः पिक" इत्यमरः । वचांसि वचनानि विस्तारयन् नराणां पुंसां हृदयानि हरन् अपहरन् विवाति वहतीत्यर्थः ॥ २२ ॥

कुन्दैरिति । सविभ्रमाणि विभ्रमसहितानि यानि वधूहसितानि रमणीहास्यानि तानीव अवदातानि धवलानि तैस्तथोक्तैः "अवदातः सितो गौरो वलक्षो धवलोऽर्जुन" इत्यमरः । कुन्दैः कुन्दकुसुमैः उद्योतितानि दीप्तानि शोभितानीति यावत् । मनोहराणि उपवनानि

आलम्बिहेमरशनास्तनसक्तहाराः
कन्दर्पदर्पशिथिलीकृतगात्रयष्ट्यः।
मासे मधौ मधुरकोकिलभृङ्गनादै
नार्यो हरन्ति हृदयं प्रसभं नराणाम्॥ २४॥

नानामनोज्ञकुसुमद्रुमभूषितान्तान्
हृष्टान्यपुष्टनिनदाकुलसानुदेशान्।
शैलेयजालपरिणद्धशिलातलौघान्
दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्व्वः॥ २५॥

---

आरामाः, निष्टत्तः अनुरागो यस्यां तथोक्तं मुनेरपि चित्तं हरन्ति अपहरन्ति प्रागेव मुनिचित्तापहरणात् प्रागेव रागेण मलिमानि यूनां मनांसि हरन्तीत्यर्थः॥ २३॥

आलम्बीति। आलम्बिन्यो लम्बमाना हेमरशनाः सुवर्णमेखला यासां तास्तथोक्ता स्तनेषु कुचेषु सक्ताः संसक्ता हारा यासां तास्तथोक्ताः कन्दर्पस्य मन्मथस्य दर्पाधिक्येन शिथिलीकृताः गात्र यष्ट्यः शरीरलता यासां तास्तथोक्ताः नार्य्यः स्त्रियो मधौ वसन्ते नराणां हृदयं कोकिलाश्च भृङ्गाश्च तेषां नादैर्विरुतैः सह प्रसभम् प्रसक्तं हरन्तीत्यर्थः॥ २४॥

नानेति। सर्वो जनः लोकः नाना नानाजातीयः मनोज्ञाः सुन्दरा ये कुसुमद्रुमाः पुष्पवृक्षास्तैर्भूषिताः शोभिताः अन्ताः प्रान्तभागा येषां तान् तथोक्तान् हृष्टा

नेत्रे निमीलयति रोदिति याति शोकं
घ्राणं करेण विरुणद्धि विरौति चोच्चैः ।
कान्तावियोगपरिखेदितचित्तवृत्ति-
र्दृष्ट्वाऽध्वगः कुसुमितान् सहकारवृक्षान् ॥ २६ ॥
समदमधुकराणां कोकिलानां च नादैः
कुसुमितसहकारैः कर्णिकारैश्च रम्यः ।

---

हर्षिता ये अन्यपुष्टाः कोकिलास्तेषां निनदैः शब्दैः आकुला व्याकुलाः सानुदेशाः प्रस्थदेशा येषां तान् तथोक्तान् "प्रस्थः सानुरस्त्रिया" मित्यमरः, शैलेयजालेन परिणद्धा व्याप्ताः शिलातलानाम् ओघाः समुदाया येषां तांस्तथोक्तान् क्षितिभृतः पर्वतान् दृष्ट्वा मुदं हर्षम् एति प्राप्नोतीत्यर्थः ॥ २५ ॥

नेत्रेति । कान्ताया वियोगेन विरहेण परिखेदिता खिन्ना चित्तवृत्तिर्यस्य स तथोक्तः अध्वगः पथिकः कुसुमितां सहकारवृक्षान् आम्रवृक्षान् "आम्रश्चूतो रसालोऽसौ सहकारोऽति सौरभ" इत्यमरः । दृष्ट्वाऽवलोक्य नेत्रे लोचने निमीलयति विधत्ते तद्दर्शनस्य सन्तापाधिक्यजनकत्वात् रोदिति शोकं याति यत्समये प्रेयसीमात्र भावात् घ्राणं करेण हस्तेन विरुणद्धि तदीयसौगन्ध्यस्यापि सन्तापाधिक्यजनकत्वात्, उच्चैः उच्चस्वरेण विरौति हा कान्तेति शब्दं करोतीत्यर्थः ॥ २६ ॥

इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां
तुदति कुसुममासो मन्मथोद्वेजनाय ॥ २७ ॥
आम्रीमञ्जुलमञ्जरीवरशरः सत्किंशुकं यद्धनु-
र्ज्या यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम् ।
मत्तेभो मलयानिलः परभृतो यद्वन्दिनो लोकजित्
सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः ॥ २८ ॥

---

समदेति । रम्यः सुन्दरः कुसुममासो वसन्तसमयः समदा मदसहिता ये मधुकराः भ्रमरास्तेषां कोकिलानां च नादैः कुसुमिताः सञ्जातकुसुमाः सहकारा आम्रवृक्षाः तैः कर्णिकारैर्द्रुमोत्पलैः सुतीक्ष्णैरतिनिशितैरिषुभिर्बाणै-रिव मन्मथोद्वेजनायास्मद्यन्मानिनीनां मानवतीनां मानसं तुदति व्यथयतीत्यर्थः ॥ २७ ॥

आम्रीति । यस्याम्री आम्रसम्बन्धिनी मञ्जुला सुन्दरा मञ्जरीवरोशरत्कृष्टो वाणः सद्वृत्तकं किंशुकं पलाशकुसुमं धनुर्यस्य अलिकुलं भ्रमरसमूहो ज्या यस्य कलङ्करहितं सितं श्वेतछत्रं शीतांशुश्चन्द्रः यस्य मत्तेभो मत्तगजः मलयानिलः मलयसम्बन्धी पवनः यस्य वन्दिनो वैतालिकाः परभृतः कोकिलाः लोकजिद्वसन्तेनान्वितो युक्तः सोऽयं वितनुरनङ्गः वो युष्मभ्यं भद्रं कल्याणं वितरतु ददात्वित्यर्थः शार्दूलविक्रीडितं छन्दः तल्लक्षणन्तु वृत्तरत्नाकरे “अर्का-श्वैर्यदि नः समौ सततगाः शार्दूलविक्रीडितमिति” ॥ २८ ॥

इति श्रीकविकालिदासकृतौ ऋतुसंहार काव्ये वसन्तवर्णनं नाम षष्ठः सर्गः समाप्तः ।

---

पूजितो न जगदीश्वरो मया नापि विश्वजननी सुसे-विता। किन्तु यत्प्रलपितं निजेच्छया तत्र सद्गुरुकृपैव कारणम् । वेदचन्द्रवसुभूमि १८१४ सत्सरे माघकृष्णसित पञ्चमीतिथौ । श्लोम पुष्करनगेर्मिमाकृतिः ७०० पूरिता हि मणिराम शर्मणा ।

इति भारद्वाज मणिरामविरचितायां ऋतुसंहार-चन्द्रिकाभिधायां टीकायां षष्ठः सर्गः समाप्तः ।